घनमिति यस्याङ्कस्य घन उपर्यङ्केभ्यः पतति तदङ्कघनं यथा त्रिएकाद्यस्त्रिकं निवेश्य त्रयाणां घनं सप्तविंशतिलक्षणमुपर्येकत्रिंशतः अपात्य शेषं ४ स्थाने स्थिताः। पश्चादेनं त्रिकं मूलं मूलाख्यं उपर्यङ्कपदस्य तृतीयस्य पञ्चकलक्षणस्याधो नयेत्, यथा {४८५५०१३ / ३}। ततोऽस्य मूललक्षणस्य त्रिनिघ्नकृत्येति यथाऽत्र मूलत्रिकं तदस्य कृतिः–वर्गो नवकं त्रिगुणः सप्तविंशतिस्तया त्रिनिघ्नकृत्या २७ एकस्थानोनतया उपर्यङ्को नियोज्यः, यथा {४८५५०१३ / २७३}; शेषमुपर्यङ्कं हरेत्–भजेत्, यथाऽत्र सप्तविंशत्यध एकं कृत्वा उपर्यष्टचत्वारिंशन्मध्यात् सप्तविंशतिर्गता एकविंशतिः स्थिता, सप्तविंशतिश्च दत्तभागत्वादुक्तार्थत्वाद् भञ्जनीया, लब्धं च फलरूपमेकं पङ्क्त्यां त्रिकाग्रतो नियोज्य–निवेश्य तत्कृतीत्यादि तस्य लब्धस्य एकस्य पङ्क्तिनिविष्टस्य कृतिः–वर्ग एक एव तामन्त्यनिघ्नीमन्त्येन त्रिकेण गुणितां यथैकस्त्रिगुणस्त्रय एव जाताः। त्रिसङ्गुणां त्रिकेण गुणितास्त्रयो जाता नव। एतेन तत्कृतिमन्त्यनिघ्नीं त्रिसङ्गुणां उपरि {२१५५०१३ / ३१} द्विशतपञ्चदशभ्यो नवकमपनयेत् शेषद्विशते षडधिके जाते घनं चेति लब्धस्यैवैकलक्षणस्य घनमेकमुपर्यङ्कादपनयेत्, जातः {२०६४०१३ / ३१}। ततः पुनरपि करणमाधातुं तृतीयस्य पदस्याधो मूलं नयेत्, यथाऽत्र एकस्योपर्यङ्कस्य तृतीयपदस्याधो मूलमेकत्रिंशतं नयेत् {२०६४०१३ / ३१}। ततोऽस्य एकत्रिंशता कृतिः–वर्ग एकषष्ट्यधिकनवशतलक्षणा, अनया विनिघ्नया त्रिगुणया त्र्यशीत्यधिकाष्टाविंशतिशतरूपया एकस्थानोनतया यथा एकत्रिंशत्सत्कत्रिकस्याधस्त्र्यशीतिसत्कत्रिकं नियोज्योपर्यङ्काङ्काधः प्रदत्तया {२०६४०१३ / २८८३१ / २ / ३} शेषमुपर्यङ्कं हरेत्, यथाऽष्टाविंशत्यधःसप्तकेन षडधिकाद्विशतादुपरिस्थात् षण्णवत्यधि(क)शतपाते स्थितदश १० पश्चादष्टादधःसप्तकेन चतुरधिशतमध्यात् षट्पञ्चाशत्पातिते स्थिता उपरि अष्टाचत्वारिंशत् पश्चात् त्रिकाधःसप्तकेनाशीतिमध्यादेकविंशतिर्गताः स्थिता एकोनपञ्चाशत्। पश्चात् त्र्यशीत्यधिकाष्टाविंशतिशती दत्तभागतयोक्तार्थत्वाद् भञ्जनीया। ततो लब्धं सप्तकं पङ्क्त्यां एकत्रि(श)दग्रतो निवेश्य ततः पूर्ववत् नवकृतिमन्त्यात्रिनिघ्नामपनयेत्, यथा तस्य सप्तकस्य कृतिः–वर्ग एकोनपञ्चाशत्, तां अन्त्येन एकत्रिंशता गुणितां एकोनविंशत्या पञ्चदशशतीं त्रिगुणां चत्वारिंशत् सहस्राः सप्तपञ्चाशल्लक्षणामेकोनस्थानतया नियोज्याधःक्रियमाणभागाङ्कं विनाऽपनयेत्, यथा एकत्रिंशत्सत्क एकस्याधःसप्तपञ्चाशत्सप्तकः सप्तकः स्यात्, यथा {४५९१३ / ४५३१७ / ५७}। ततः पञ्चचत्वारिंशत्सदृशीत्वात् पञ्चचत्वारिंशद् गता एकनवतेर्मध्यात् सप्तपञ्चाशद् गताश्चतुस्त्रिंशत्। उक्तार्थत्वात् पञ्चचत्वारिंशत् सप्तपञ्चाशदेको भञ्जनीयः। तथा तस्य सप्तकस्य घनं त्रिचत्वा-

रिंशदधिकशतत्रयलक्षणमपनयेत् । अधश्च लब्धं प्रागुक्तत्रिकोट्यादिघनमूलं सप्तदशाधि(क)त्रिशतलक्षणं३१७विधानमेतदित्यादि स्पष्टम् । आम्नायेन वा यस्य घनस्य त्रिकोट्यादेर्यन्मूलं सप्तदशाधि(क)त्रिशतलक्षणं तस्य ३१७ यो वर्ग एकलक्षचतुःशतएकोननवति१००४८९लक्षणस्तेन त्रिकोट्यादिघनस्य भागे दत्ते यथा { ३१८५५०१३ / १००४८९ / ३ } प्रथमं भागाङ्का अधस्त्रिकेण प्रसिद्धरीत्योपर्यङ्कभागापहारे उपरि स्थिताङ्का यथा ७०३४२३ लब्धं चैकः स प्राग् लब्धं त्रिकाग्रेऽन्यत्र देयो यथाऽन्यत् ३१ अन्यत्र च स्थाप्यौ अधःस्थाङ्काश्च सञ्चार्यभागाङ्काधःसप्तकेनोपर्यङ्कभागापहारे यथा { ७०३४२३ / १००४८९ / ७ } । उपर्यङ्काः सर्वेऽपि गताः, लब्धं च सप्त ते प्राग्लब्धत्र्येकाग्रतो योज्या यथा ३१७ । एतच्च त्रिकोट्यादिघनमूलम् । एते सर्वत्र घनाङ्कानां वर्गेण भागे दत्ते घनमूलमायातीति स्थितम् ।

अत्रोद्देशकः श्लोकः—

**घनानां पूर्वलब्धानां, मूलानि वद कोविद ! ।**
**यद्यस्ति भवतः सम्य-गभ्यासः परिकर्मसु ॥**

अस्य न्यासेन व्याख्या, यथा—१।८।२७।६४।१२५।२१६।३४३।५१२।७२९।५८३२। ३८९०१७।३१८५५०१३ । एषामुत्तरं प्रागुक्तसङ्ख्यां कृत्वा न्यासेनैव यथालब्धं मूलानि—१।२।३।४।५।६।७।८।९।१८।७३।३१७ । एवं घनमूलविधिः । एतत्समाप्त्या पूर्वाण्यष्टौ परिकर्माणि समाप्तानि ॥

---

भिन्नसङ्कलितम्—

अथ भिन्नसङ्कलिते करणसूत्रवृत्तार्धमाह—

**सदृशहरलवानां योजनं सम्प्रदिष्टं**
**हरविरहितराशेश्छेदकः कल्प्य एकः ॥[2]**

व्याख्या—प्राक् पूर्णरूपाणां सङ्कलितमुक्तम् । इदानीं भिन्नानां—खण्डितानां रूपाणां वक्ष्यमाणरूपार्धप्रभृतीनां सङ्कलितोपायमाह—सदृशेति । सदृशहराः—सदृशच्छेदाः अधोवर्त्यङ्का ये लवा—उपर्यङ्का अंशास्ते तथा तेषां संयोजनं—संमीलनं यत् तद् भिन्नसङ्कलितं स्यादिति सम्बन्धः । उदा० । अर्धं त्रिभागश्च नवांशकश्च अष्टादशश्च युतो भवेत् किम् । वृत्तपूर्वार्धम् । रूपस्यापूर्णस्यार्धं रूपस्य भागो रूपस्य नवांशो रूपस्याष्टादशांशश्च एषां युतौ पूर्वोक्तयुक्त्या संयोगे किं स्यादिति प्रश्नः । अथ संयोगरीतिः कथ्यते । रूपशब्देनैकस्तदधो द्व्याद्यङ्केन छेदान्यासः । { १/२ | १/३ | १/९ | १/१८ }

एषां सदृशहरलवकृते भागे जातो वक्ष्यमाणस्य "अंशच्छेदौ छेदनाभ्यां विहन्यादन्योन्यस्य छेदसादृश्यहेतोः" इति वृत्तार्धस्य व्याख्या [या] । तथाहि अत्र

---

१ अनुष्टुप् । २ मालिनी ।

एकका अंशाच्छेदाद् द्व्यादयस्ततो द्वन्द्वे रूपं अन्योन्यस्य परस्परं छेदनार्थं विनिमयविहिताभ्यां यथा एकत्रांशच्छेदाधस्त्रयः अपरत्रांशच्छेदाधो द्वौ यथा {१/२/३ | १/३/२} ततश्छेदाभ्यां त्रिद्विभ्यामंशच्छेदो विहन्यात्, यथा त्रिगुण एको जातास्त्रयोऽशास्तथा त्रिगुणौ द्वौ जाताः षट् {३/६/३} हराख्याः। द्वितीये द्विगुण एको जातौ द्वौ। द्विगुणास्त्रयो जाताः षट् {२/६/२} हराख्याः। तत एतौ सदृशहरौ समानषट्कच्छेदौ लब्धौ द्वित्रिलक्षणौ तयोः संयोजनं त्रिमध्ये द्विक्षेपे जाताः पञ्चांशाः षट्छेदा मिलितत्वात् प्राक् छेदांशौ भञ्जनीयौ यथा {५/६/२} अस्याधो द्विकोऽप्युक्तार्थत्वाद् भञ्जनीयः, यथा {५/६} अथाग्रेतनाङ्क {१/९} संयोजना प्रागिव, यथा अंशच्छेदावित्यादिना छेदविनिमये एकत्र षडधो नव। एकत्र नवकाधः षट् यथा {५/६/९ | १/९/६} तत् छेदाभ्यां नवषट्काभ्यां विहन्यात्, यथा नवगुणाः षट् जाताश्चतुःपञ्चाशत्। नवगुणाः पञ्च जाताः पञ्चचत्वारिंशत्, यथा {४५/५४/९} तथा षड्गुणा नव जाताश्चतुःपञ्चाशत्, षड्गुण एको जाताः षट् यथा। ततः सदृशहरेति विधिः कार्यो यतो हरा एव सदृशा विलोक्याः, न लवाः। ततः समानच्छेदानां पञ्चचत्वारिंशल्लक्षणानां षड्योगे जाता एकपञ्चाशत्, चतुःपञ्चाशत् छेदाः पूर्वराशिषट्कश्चोक्तार्थत्वाद् गता यथा {५१/५४}। अथाग्रेतनाङ्क १८ योजना यथा—अंशच्छेदावित्यादिना। छेदविनिमये चतुःपञ्चाशदधोऽष्टादश तथाऽष्टादशाधश्चतुःपञ्चाशद्, यथा {५१/५४/१८ | १/१८/५४}। ततोऽष्टादशगुणाश्चतुःपञ्चाशत् जाता द्वासप्तत्यधिका नवशती तथाऽष्टादशगुणा एकपञ्चाशत् जाता नवशत्यष्टादश च। द्वितीये चतुःपञ्चाशद्गुणा अष्टादश जाता नवशती द्विसप्ततिश्च। तथा चतुःपञ्चाशद्गुण एको जाता चतुःपञ्चाशत्। ततः सदृशच्छेदत्वात् पूर्ववत् सदृशहराणां लवानां नवशताष्टादशानां पञ्चाशद्योजने जाता नवशती द्वासप्ततिश्च। प्राग् राशिश्चतुःपञ्चाशच्चोक्तार्थत्वाद् गता, यथा {९७२/९७२}। सदृशच्छेदांशत्वात् एषामर्धत्रिभागादीनां सञ्जातद्वासप्तत्यधिकनवशतानां समानच्छेदैर्भागे दत्ते सङ्कलिते रूपमेकं लब्धं यथा १। यदा हरो न भवति लवा एव स्युस्तदा तेषां भिन्नानां रूपखण्डानां किं कार्यमित्याशङ्क्याह—हरविरहितेत्यादि। हरेण एकद्विभागादिना यो विरहितो राशिः सम्पूर्ण एव यथा वक्ष्यमाणोदाहरणे षड् रूपाणि तस्याध एकश्छेदकः स्वयं कल्पनीय इत्यर्थः।

उदाहरणं वृत्तोत्तरार्धं यथा—

सार्धत्रयं षण्णवपादहीना-
त्र्यंशान्वितात् सप्त च योजय द्राक्॥[1]

---

१ इन्द्रवज्रा।

व्याख्या—रूपत्रयं पूर्णं चतुर्थरूपस्यार्धं तस्याधो देयम्। षट् पूर्णानि रूपाणि, अस्याध एकः छेदकः कल्प्यः। तथा नव रूपाणि पादहीनानि–एकभागहीनानि। तथा सप्त रूपाणि त्र्यंशान्वितानि–त्रिभागान्वितानि। यथा न्यासः—{ ३ १ २ | ६ १ | ० ९ १ ४ | ७ १ ३ }। अत्र प्राग् भागानुबन्धजात्युक्तविधिः कार्यः, यथा त्रिशत्यां “रू[1]पग(गु)णच्छेदसङ्गुणः सांशः,” यथाऽत्र सार्धत्रयन्यासे छेदेन त्रिकेण गुणितो रूपगणत्रिकलक्षणो जाताः षट्, सांश अधस्तेनैकसहिताः षट् जाताः सप्त, यथा{ ७ २ }। अग्रेतनाङ्कैकच्छेदषट्कयोजनार्थ“मंशच्छेदा”वित्यादिना छेदसादृश्ये द्विद्विलक्षणे ज्ञाते उपर्यंशानां{ ७ २ १ | १२ २ २ } सप्त द्वादशानां योगे जाता एकोनविंशतिर्द्विच्छेदा प्राग् राशिर्निवृत्तः। द्विकाधो द्विकोऽपि जातो यथा { १९ २ }। ततोऽग्रेतनाङ्कनवपादहीनलक्षणयोजनायां प्राग् भागापवाहजातिः कार्यः, यथा–“भागापवाहनविधौ हरनिघ्नरूपे राशेर्लवानपनयेत्” इति वक्ष्यति { ० ९ १ ४ }। ततो हरेणात्र चतुष्केण गुणिते रूपे नवलक्षणे जाताः षट्त्रिंशत्। ततस्तस्मात् षट्त्रिंशद्रूपाद् राशेर्लवानपनयेत् यथाऽत्रैकापनयने जाताः पञ्चत्रिंशत्। एको भज्यते जाताश्चतुश्छेदाः पञ्चत्रिंशत्, यथा { ३५ ४ }। ततोऽशच्छेदौ छेदनेति विधिकरणायात्र छेदयोर्द्विचतुष्करूपयोरर्थेनैकद्विलक्षणेनापवर्तं कृत्वा छेदाध एको द्वौ च न्यस्यौ, यथा { १९ २ २ | ३५ ४ १ }। छेदेन द्विलक्षणेन गुणितौ द्वौ जाताः चत्वारस्तथा द्विगुणैकोनविंशतिर्जाता अष्टात्रिंशत्, परत्र एकगुणं तादृश्ये(शे?) च चतुश्छेदाः पञ्चत्रिंशत्, यथा { ३८ ४ | ३५ ४ }। ततः सदृशहरत्वाल्लब्धाष्टात्रिंशन्मध्ये पञ्चत्रिंशत्क्षेपे जातास्त्रिसप्ततिश्चतुश्छेदाः प्राग्राशिरेकलक्षणच्छेदश्च भग्नः। एतेन यत्राङ्कोऽपवर्तं सहते तत्राङ्कमपवर्त्यान्योन्यं लिखित्वा छेदाभ्यामपवर्तितच्छेदाभ्यां विहन्यादिति दर्शितम्। न्यासो यथा—{ ७३ ४ }। ततोऽग्रेतनाङ्कत्र्यंशान्वितसप्तयोजनार्थं भागानुबन्धजात्युक्तरूपगणेत्यादिना त्रिगुणाः सप्त जातैकविंशतिः, अंशैकक्षेपे जाता त्रिच्छेदा द्वाविंशतिः, यथा{ २२ ३ }। ततोऽशच्छेदावित्यादिना त्रिचतुष्कच्छेदाभ्यां मिथो गुणिते समानद्वादशकच्छेदे हरलक्षणे जाते उपरि त्रिगुणत्रिसप्तत्या जातद्विशत्येकोनविंशतिलक्षणानां लवानां मध्ये चतुर्गुणद्वाविंशत्या जाताष्टाशीतिलवक्षेपे जाता सप्ताधिका त्रिशती, अधो द्वादशच्छेदाः, प्राग् राशिस्त्रिकच्छेदश्च निवृत्तः। ततः सप्ताधि(क)त्रिशतस्याधो द्वादशभिश्छेदत्वाद् भागे लब्धं पूर्णानि पञ्चविंशतिरूपाणि सप्त द्वादशभागा यथा { २५ ७ १२ }। एवं सर्वत्र। भिन्नसङ्कलितं समाप्तम्॥

---

१ चतुर्विंशतितमोऽयं नियमः।

२ गणित०

भिन्नव्यवकलिते करणसूत्रं वृत्तार्धम्—

कृतसमहरराश्योरंशविश्लेषमाहु-
व्यवकलितविधाने ज्ञातपाटीनिबन्धाः ॥ ३३ ॥[1]

व्याख्या—भिन्नानां—रूपखण्डानां षड्भागादीनां व्यवकलितोपायमाह—कृतसमेति । व्यय आयमपेक्षते, ततो राशी—आयव्ययराशी एतौ कृतसमहरौ—विहितसमानच्छेदौ, ततो द्वन्द्वे तयोः कृतसमहरराश्योर्मध्ये य आयराशिस्तस्माद् व्ययराशिजातानामंशानां षड्भागादिसमुत्थिताङ्कानां विश्लेषं—पातं पश्चाच्छेषमङ्कं व्यवकलितधनमाहुः । शेषं स्पष्टम् ॥

अत्रोद्देशवृत्तेनोदाहरणद्वयमाह—

एकस्माद् भो द्रम्मतः प्रोज्झ्य विद्वन् !
षड्भागार्धं त्र्यंशकान् ब्रूहि शेषम् ।
सार्धं त्र्यंह्रिं साष्टभागं तथैकं
त्यक्त्वा त्र्यंशेनान्वितद्रम्मषट्कात् ॥ ३४ ॥[2]

व्याख्या—एकस्माद् द्रम्मतो—रूपकाद् द्रम्मषड्भागं तथा द्रम्मार्धं तथा त्र्यंशकं—तृतीयं द्रम्मभागं त्यक्त्वा शेषं ब्रूहीति एकमुदाहरणम् । अस्य न्यासः । पूर्वं यस्माद् व्ययः करिष्यते तद्रूपं न्यस्य पूर्णानि हरविरहितत्वादेकश्छेदः कल्प्यः, शेषाणां भागानां तस्य पुरो न्यासो यथा $\left\{\begin{array}{c|c|c|c} १ & १ & १ & १ \\ १ & ६ & २ & ३ \end{array}\right\}$ । अत्र कृतसमहरराश्यर्थं प्रथमषड्भागस्यार्धस्य सदृशच्छेदताकृतये "अंशच्छेदौ" इत्यादिप्रागुक्तच्छेदविनिमयेन गुणनेन जातौ द्वौ द्वादशच्छेदौ उपरि च द्वौ षट् च । ततः समहरत्वाद् द्विमध्ये षट्क्षेपे जाता अष्टौ अधश्च द्वादश च्छेदाः । प्राग् राशिषट्कश्छेदश्च भज्यते उक्तार्थत्वात्, यथा $\left\{\begin{array}{c} ८ \\ १२ \end{array}\right\}$ । ततोऽग्रेतनाङ्के त्र्यंश $\left\{\begin{array}{c} १ \\ ३ \end{array}\right\}$ योजनार्थं पुनरपि "अंशच्छेदौ" इत्यादिना छेदविनिमयेन गुणनया जाताः समानाः, उभयत्र षट्त्रिंशल्लक्षणाश्छेदाः, यथा $\left\{\begin{array}{c|c} २४ & १२ \\ ३६ & ३६ \\ ३ & १२ \end{array}\right\}$ । ततः समानच्छेदत्वात् अधः षट्त्रिंशद् द्विकत्वादुपरि चतुर्विंशत्यंशानां मध्ये द्वादशसंयोगे जाताः षट्त्रिंशत्, अधोऽपि षट्त्रिंशत् । एष व्ययाङ्कराशिः संयोजितः प्राग् राशियाद(दृ?)शलक्षणच्छेदश्च भज्यते, यथा $\left\{\begin{array}{c} ३६ \\ ३६ \end{array}\right\}$ । तत आयराशेः समहरत्वकृते पुनरपि "अंशच्छेदौ" इत्यादिना छेदविनिमये गुणनया यथा $\left\{\begin{array}{c|c} १ & ३६ \\ १ & ३६ \\ ३६ & १ \end{array}\right\}$ । अत्र द्वावप्यायराशी समानषट्त्रिंशच्छेदौ

१ मालिनी । २ शालिनी ।

उपरि षट्त्रिंशदंशौ २ जातौ । ततोऽंश[त्रि]षट्त्रिंशद्रूपस्य षट्त्रिंशद्रूपभागापनयने शेषं शून्यमेव लब्धम्, यथा {०} ॥

अथ द्वितीयोदाहरणमुत्तरार्धेनाह—सार्धमित्यादि । अत्रायराशिं विन्यस्य तत्पुरो व्ययराशिं न्यसेदिति रीतिः । ततः त्र्यंशान्वितद्रम्मषट्कात् सार्धं रूपं व्यंह्रि–विगतैकभागं रूपं तथा साष्टभागमेकं रूपं त्यक्त्वा यत् तस्य शेषं तद् व्यवकलितधनं ब्रूहि–वदेति सम्बन्धः । न्यासो यथा {६/१/३ | १/१/२ | ०/१/४ | १/१/८} । अत्र प्राच्याङ्क आयराशिः, शेषो व्ययराशिः । ततो द्वौ समहारौ कृत्वा आयाङ्कतो व्ययराशेरंशभूतस्य विश्लेषं कुर्यादिति सूत्रार्थः । कृते पूर्वं व्ययस्य राशेः समहरविधानाय सार्धैकरूपे "छेदनिघ्नेषु रूपेषु रूपं क्षिपेत्" इति वक्ष्यमाणभागानुबन्धयुक्त्या द्विगुण एको जातौ द्वौ, अधोऽध एकक्षेपे जातास्त्रयो द्विच्छेदाः, अग्रेतना व्यंह्रि एकरूपे "भागापवाहनविधौ हरनिघ्नरूपे राशेर्लवानपनयेत्" इति युक्त्या चतुर्गुण एको जाताश्चत्वारः, एकापनयने जातास्त्रयः चतुश्छेदाः । ततः "अंशच्छेदौ" इत्यादिना छेदविनिमये गुणने च जातौ समानावष्टच्छेदौ, उपरि च सदृशच्छेदत्वात् द्वादशानां मध्ये षट्क्षेपे जाता अष्टादश अष्टच्छेदाः प्राग्राशिद्विकच्छेदश्च भञ्जनीयो यथा {१८/८} । ततोऽग्रेतनाङ्कसाष्टभागैकरूपे {१/१/८} छेदनिघ्नेषु रूपेषु रूपक्षेपे छेदा लब्धं च प्राग् द्वौ तदधस्त्रयोविंशतिस्तदधश्चतुर्विंशतिर्न्यसनीया यथा न्यासः {२/२३/२४}। एतेन यथा व्ययराशेरंशरूपस्याधश्छेदा भवन्ति । यथा एकाशीत्यधो द्वादशच्छेदास्तदा आयराशेर्द्विपञ्चाशदधि(क)शतप्रभृतेरंशानामेकाशीतिप्रभृतीनां प्राग् विश्लेषं कृत्वा शेषस्यायराशेश्छेदैर्द्वादशप्रभृतिभिर्भागे यल्लब्धं द्व्यादि तदुपरि शेषांशौ त्रयोविंशतिचतुर्विंशतिप्रभृतिकौ तदधः इति तत्त्वम् । व्यवहारे तु त्र्यंशान्वितद्रम्मषट्कात् सार्धैकरूपादौ व्ययिते व्ययशेषद्रम्मद्वयं तृतीयश्चैकभागौ(?)नतः । एवं सर्वत्र । भिन्नव्यवकलितं समाप्तम् ॥

भिन्नप्रत्युत्पन्नम्—

भिन्नप्रत्युत्पन्ने करणसूत्रं वृत्तार्धमाह—

**गुणनाफलं भवति भागवधे, हरताडनेन च हृते नियतम् ।**[1]

व्याख्या–उपर्यङ्का अत्र भागा अधोऽङ्का हरा उच्यन्ते । ततो भागद्वयाङ्के भागैर्भागानां वधे–गुणने गुणनिष्पन्नाङ्कं अधोऽङ्कं हरेण द्वितीयस्य हरा-

---

१ प्रश्लिष्टाक्षरा ।

ङ्कस्य ताडनेन—गुणितनिष्पन्नाङ्केन कृ(हृ)ते—दत्ते भागे लब्धं तद् गुणनाफलं स्यादिति क्रिया ॥

अत्रोद्देशकवृत्ते उदाहरणद्वयमाह—

सदलत्रितयं गुणितं सुमते !
त्रिलवेन युतैर्नवभिः कथय ।
गणितं यदि वेत्सि तदा चरणो
दलसङ्गुणितश्च भवेन्ननु किम् ? ॥[1]

व्याख्या—सदलेति सार्धत्रितयमध्युष्टलक्षणं त्रिलवेन—त्रिभागेन युतैर्नवभिर्गुणितं किं भवेदिति प्रश्नः । स प्रपञ्चयिष्यते । यथा न्यासः $\left\{\begin{array}{c|c} ३ & ९ \\ १ & १ \\ २ & ३ \end{array}\right\}$ । सर्वत्राङ्कविधौ भागानुबन्धेष्वङ्के प्राग्भागानुबन्धजातिविधिं विधायान्यो विधिरेवं भागापवाहसंयतेष्वङ्के तदुक्तविधिं कृत्वाऽन्यो विधिः कार्य इति हृदयम् । यथाऽत्र भागानुबन्धत्वात् "छेदनिघ्नेषु रूपेषु भागं क्षिपेत्" इति युक्त्या प्रागङ्के द्विगुणास्त्रयो जाताः षट्, सैका जाताः सप्त द्विच्छेदाः । तथा परत्र त्रिगुणा नव जाताः सप्तविंशतिः, सैका अष्टाविंशतिस्त्रिच्छेदाः । ततोऽत्र सूत्रोक्तभागवधे इति भागैः सप्तभिर्गुणिता अष्टाविंशतिर्जाताः षण्णवत्यधि(क)शतम् । तस्मिन् हरताडनेति हरेण द्विलक्षणेतरस्य त्रिरूपस्य ताडनम्, जाताः षट्, तेन प्राक् षण्णवत्यधि(क)शते कृ(हृ)ते लब्धं द्वात्रिंशत् अर्धेन चतुर्णां षण्णां चापवर्तने द्वौ त्रयः क्रमादधोऽधो लेख्याः । यथाक्रमं न्यासः $\left\{\begin{array}{cc} ३ & २ \\ & २ \\ & ३ \end{array}\right\}$ । व्यवहारेण त्रिभागोनास्त्रयस्त्रिंशत् ॥

अथ द्वितीयोदाहरणं यथा—चरणो दलेति । चरणो—रूपस्य चतुर्थो भागो दलेन—रूपार्धेन सङ्गुणितः किं भवेदिति । न्यासो यथा—$\left\{\begin{array}{c|c} १ & १ \\ ४ & \end{array}\right\}$ । यदोपरि रूपाणि स्युस्तदा भागानुबन्धजातिः । अत्र तु द्वयेऽपि भागा इति कृत्वा भागजातिरियम् । ततोऽत्र भागानुबन्धोक्तविधिर्नहि । ततो भागवधे भागेनैकेन भागस्यैकस्य वधे—गुणने एक एव । तत्र हरताडेति हरेण चतुष्केण द्विकस्य ताडनम्, जाता अष्टौ । अनेनोपरिस्थितैकत्वाद् भागं हर्तुं न शक्यत इति यथास्थित्योपर्येकस्तदधोंऽशहरयोरुपर्यंशरूपस्याधो हररूपस्य चाष्टौ स्थाप्या यथालब्धं न्यासः $\left\{\begin{array}{c} १ \\ ८ \end{array}\right\}$ । व्यवहारेण द्रम्मैकाष्टभागः सार्धलोष्टिकद्वयरूपो जातः । एवं सर्वत्र । भिन्नप्रत्युत्पन्नः समाप्तः ॥

---

१ तोटकम् ।

भिन्नभागा(ग)हारे करणसूत्रं वृत्तमाह—

कृत्वा परीवर्तनमंशहारयो-
हरस्य तद्वत् कुलिशापवर्तनम् ।
हरांशयोः सङ्गुणनाभवो विधि-
स्ततो विधेयो नियतं जिहीर्षता ॥[1]

व्याख्या—जिहीर्षता–भागहारविधिं विधित्सता । कृत्वेत्यादि अंशहारौ द्वावप्यङ्कौ स्तः, परं तयोरंशहारयोरङ्कयोर्मध्ये अग्रेतनो हरो वाच्यः । ततस्तस्य हरस्योपर्यंशहारयोरुपर्यंशरूपस्याधो हाररूपस्य चापवर्तनं कृत्वा पूर्वं यथाप्राप्तं भागानुबन्धादिविधिं कृत्वा द्वितीयाङ्कस्थाने उपर्यङ्कोऽधो न्यस्यः, अधोऽङ्कश्चोपरि स्थाप्यः । ततः पक्षद्वयेनाङ्कचतुष्टयस्य कुलिशतां–वज्रतां प्राप्तस्य यदि प्राच्यः परो वाऽङ्कोऽपवर्तनमर्धादिच्छेदं सहते तदा तद्वत् कुलिशापवर्तनं कृत्वा सङ्गुणनेति पूर्ववद् भागवधे–हरताडनेन हृते भार(ग)हारफललब्धये नियतं–निश्चितं विधेयमिति सण्टङ्कः ॥

अत्रोद्देशकवृत्ते उदाहरणचतुष्कमाह—

दश सचरणा भक्ताः षड्भिस्त्रिभागसमन्वितै-
र्गणक ! विधिवत् सार्धाशीतिः शरैस्त्रिलवोनितैः ।
दलमपि हृतं षड्भागेन त्रिभिश्चरणो हृतो
भवति किमिति ब्रूहि क्षिप्रं हरो विदितो यदि ॥[2]

व्याख्या—हे गणक ! यदि हरो–भागहारविधिर्विदितस्तदा क्षिप्रं ब्रूहि । दश सचरणाः–सचतुर्भागा दश त्रिभागसमन्वितैः षड्भिर्भक्ताः किं भवेदिति । प्रथमोदाहरणं न्यासो यथा { १० १ ४ | ६ १ ३ } । अत्र भागानुबन्धजातौ "छेदनिघ्नेषु रूपेषु रूपं क्षिपेत्" इत्यादिना प्रागङ्के चतुर्गुणा दश चत्वारिंशत् रूपक्षेपे एकचत्वारिंशत् चतुश्छेदाः, परत्र त्रिगुणाः षट् अष्टादश रूपए(पै?)कक्षेपे जाता एकोनविंशतिस्त्रिछेदाः, यथा { ४१/४ | १९/३ } । ततोऽपरः सवर्णितो हरो वाच्यस्ततस्तदस्य हरस्यांशहारयोः परीवर्तनं कृत्वा–विपर्ययमेकोनविंशतिमधो नीत्वा त्रींश्चोपरि कृत्वा, यथा { ४१/४ | ३/१९ } ततोऽपवर्तनसहभावाद् यथास्थिता एवाङ्काः । अथ प्रागिव भागवधे त्रिगुणा एकचत्वारिंशत् जातं त्रयोविंशत्यधि(क)शतं १२३ । तत्र हरताडेति

१ इन्द्रवंशा (?) । २ हरिणी ।

एकोनविंशत्या हरलक्षणया चतुष्कस्य हरस्य ताडनम्, जाताः षट्सप्ततिः । अनया त्रयोविंशत्यधि(क)शतैकाङ्के हृते लब्धं रूपमेकं सप्तचत्वारिंशत् षट्सप्ततिच्छेदाः, यथा $\left\{\begin{matrix}१\\४७\\७६\end{matrix}\right\}$ ।

अथ द्वितीयोदाहरणमाह—विधिवत् सार्धाशीतिः शरैस्त्रिलवोनितैः स्पष्टम् । न्यासः $\left\{\begin{matrix}८०\\१\\२\end{matrix}\middle|\begin{matrix}०५\\१\\३\end{matrix}\right\}$ । अत्र प्रथमाङ्के भागानुबन्धत्वात् छेदनिघ्नेत्यादिना द्विगुणाऽशीतिः सषष्टिशतं सैकं जातं सैकषष्टिशतं द्विच्छेदम्, यथा $\left\{\begin{matrix}१६१\\२\end{matrix}\right\}$ । परत्र भागापवाहत्वाद् "भागापवाहनविधौ हरनिघ्नरूपे"त्यादिना त्रिगुणाः पञ्च जाताः पञ्चदश, एकापनयने १४ त्रिच्छेदा यथा $\left\{\begin{matrix}१४\\३\end{matrix}\right\}$ । अस्य हरवाच्यस्य हरराशयोः[1] परिवृत्तौ जाता उपरि त्रयोऽधश्चतुर्दश, यथा $\left\{\begin{matrix}३\\१४\end{matrix}\right\}$ । ततो भागवधे त्रिभिरेकषष्टिशतस्य वधे जातत्र्यशीत्यधि(क)त्रि(चतुः)शते । हरताडेति चतुर्दशगुणौ द्वौ जाता अष्टाविंशतिः । तथा प्राक्तनाङ्के हृते लब्धं सप्तदश, तस्याधोऽपवर्तने सप्तानां सप्तभागे एकस्तस्याधः अष्टाविंशतेः सप्तभागे चत्वारः, यथा $\left\{\begin{matrix}१७\\१\\४\end{matrix}\right\}$ ।

तृतीयोदाहरणमाह—दलमपि हृतं षड्भागेन स्पष्टं $\left\{\begin{matrix}१\\२\end{matrix}\middle|\begin{matrix}१\\६\end{matrix}\right\}$ । अत्राग्रेतनाङ्कस्य रूपषड्भागस्य हरवाच्यस्य हरांशयोः परिवृत्तौ उपरि षट् अध एकः । ततो भागवधे षड्गुण एको जाताः षट् । अस्य हरताडेति एकगुणौ द्वौ । द्वावेव ताभ्यां भागे लब्धं रूपाणि त्रीणि $\left\{\begin{matrix}३\\१\end{matrix}\right\}$ ।

अथ चतुर्थमुदाहरणमाह—त्रिभिश्चरणो हृतो भवति । व्याख्या । रूपैस्त्रिभिश्चरणो रूपं चतुर्थो भागो हृतः किं भवेत् । न्यासः $\left\{\begin{matrix}१\\४\end{matrix}\middle|\begin{matrix}३\\१\end{matrix}\right\}$ । अत्राग्रेतनाङ्कस्य त्रि-एकरूपस्य हरस्य हरांशविपर्यये उपरि एकः अधस्त्रयः । ततो भागवधे एकगुणं एक एव । हरताडेति त्रिगुणाश्चत्वारो जाता द्वादश । लब्धमप्येतदेव । रूपस्य द्वादश भागाः, यथा $\left\{\begin{matrix}१\\१२\end{matrix}\right\}$ । एवं भिन्नभागा(ग)हारः समाप्तः ॥

### भिन्नवर्गः—

अथ भिन्नवर्गे करणसूत्रं वृत्तार्धमाह—

**हरराशिवर्गविहृताऽंशकृतिः, क्रियते विभिन्नकृतये कृतिभिः ३८[2]**

व्याख्या—कृतिभिरंशानां स्थानद्वयेऽप्युपर्यङ्कानां भागानुबन्धादिना समानरूपाणां कृतिः सदृशद्विराशिघातलक्षणा सा हरराशिः स्थानद्वयेऽप्यधोऽङ्को हरस्तस्य वर्गः सदृशद्विराशिघातरूपस्तेन विहृता-दत्तभागा विभिन्नकृतये-भिन्नवर्गानयनाय क्रियत इति सम्बन्धः ॥

---

१ 'हरांशयोः' इति प्रतिभाति । २ प्रमिताक्षरा ।

वृत्ते उदाहरणचतुष्टयमाह—

**पादोनानां पञ्चानां द्राक्, भो(सार्धा?)ऽष्टानां वर्गं ब्रूहि ।**
**विद्वन् ! पाटीं चेज्जानासि, त्रिद्व्यंशाङ्कस्यापि क्षिप्रम् ॥ ३९ ॥**[1]

व्याख्या—स्पष्टम् । आद्यपादेनाद्यमुदाहरणं पादोनेति । न्यासः सूत्रे एकैकवेलमस्ति, परं वर्गः सदृशाङ्कद्वयेनैव स्यादिति वृत्तौ द्वयन्यासो दर्श्यते । यथा {५ / ०१ / ४ | ५ / ०१ / ४} । अत्र भागापवाहजातित्वात् {१९ / ४ | १९ / ४} । स्थानद्वयेऽपि चतुर्गुणाः सैकापनयना जाताः स्थानद्वये चतुश्छेदा एकोनविंशतिरंशा यथा । एषां कृतिरेकोनविंशत्या एकोनविंशतिगुणनादेवं(क ?)त्रिषष्ठ्यधि(क)त्रिशद्रूपा(?)[2] । ततो हरराशिश्चतुष्कलक्षणः, तस्य वर्गसदृशेन द्वितीयचतुष्केण गुणनात् षोडशकरूपस्तेन । अयमर्थः—अनेन षोडशकेन एक[त्रि]षष्ठ्यधि(क)त्रिशत्या भागे लब्धं द्वाविंशतिर्नव षोडशभागा यथा {२२ / ९ / १६} ।

द्वितीयोदाहरणमाह—सार्धाष्टेति । न्यासः {८ / १ / २ | ८ / १ / २} भागानुबन्धत्वात् छेदनिघ्नेत्यादिना स्थानद्वयेऽपि द्विगुणा अष्टौ जाताः सप्तदशांशाः । एषां कृतिः सप्तदशभिः सप्तदशगुणनात् एकोननवत्यधि(क)द्विशती । हरराशिश्च द्वौ, तस्य वर्गो द्विकेनाहतत्वाच्चतुष्कलक्षणस्तेन हृता । इदं तत्त्वम् । चतुष्केणैकोननवत्यधि(क)द्विशती तस्य च चतुर्थो भागो यथा {७२ / १ / ४} ।

तृतीयचतुर्थे एकपदेनाह—त्रिद्व्यंशाङ्कस्येति । तृतीयोदाहरणन्यासः {१ / ३ | १ / ३} । अत्र भागजातिरेव, ततः अंशकृतिरेकगुण एक एव । वर्गहरराशिस्त्रिलक्षणः, तस्य वर्गस्त्रिगुणत्वान्नव, तेन विहृतौ लब्धं रूपस्य नवमो भागो यथा {१ / ९} ।

अथ चतुर्थोदाहरणन्यासः {१ / २ | १ / २} । अत्रापि भागजातित्वादंशकृतिरेक एव । हरराशीति हरराशिर्द्विलक्षणः, तस्य वर्गो द्विहतत्वात् चतुष्कः, तेन विकृ(हृ?)त्वा लब्धं भिन्नवर्गे रूपस्य चतुर्थो भागो यथा {१ / ४} । एवं भिन्नवर्गः समाप्तः ॥

### भिन्नवर्गमूलम्—

भिन्नवर्गमूले करणसूत्रं वृत्तार्धमाह—

**छिद्वर्गमूलेन हृतेऽशवर्ग—मूले विभिन्नं कृतिमूलमाहुः ।**[3]

व्याख्या—छेदनं छित्—अधोऽङ्कराशिः तस्य वर्गः समद्विराशिघातस्तस्य यन्मूलं—बीजं तेन हृते—विभाजितेऽशवर्गमूले—उपर्यङ्कवर्गमूले विभिन्नं कृत(ति)-मूलं—भिन्नवर्गमूलमाहुः, बुधा इति शेषः ।

---

१ विद्युन्माला । २ 'एकषष्ठ्यधिकत्रिशतीरूपा' इति भाति । ३ इन्द्रवज्रा ।

अत्रोद्देशकः श्लोकः—

प्राक् प्रासकृतिमूलानि, प्रचक्ष्वाशु विचक्षणः (? ण!) ।
भिन्नानि परिकर्माणि, भवता विदितानि चेत् ॥[1]

व्याख्या—प्राग् भिन्नवर्गसूत्रे प्राकम(प्रकृ?)तिलब्धाः पादोनपञ्चकादीनां याः कृतयो–वर्गा द्वाविंशतिनवषोडशच्छेदप्रभृतयस्तेषां मूलानि पादोनपञ्चप्रभृतीनि शिष्यप्रत्ययनिमित्तं प्रचक्ष्वेति सण्टङ्कः । शेषं स्पष्टम् । अत्र प्रथमोदाहरणं यथा {२२ / ९ / १६} । भागानुबन्धत्वात् छेदनिघ्नेत्यादिना षोडशगुणा द्वाविंशतिर्जाता द्विपञ्चाशदधि(क)त्रिशती नवरूपयुता सैकषष्टित्रिशती षोडशच्छेदा । तदस्य सवर्णितांशवर्गस्य अंशवर्गमूलं इति सूत्रोक्त्या मूलानयनाय समविषमेत्यादिना पूर्वोक्तप्रक्रियया यथालब्धं रूपमेकोनत्रिंशत् । अस्यां द्विगुणार्धेन जाता एकोनविंशतिः । इयमंशवर्गमूलम् । तस्मिन् छिद्वर्गमूलेति । अत्र छित् छेदं षोडशकस्तस्य मूलं चत्वारस्तैर्हृते । अयमर्थः—एकोनविंशतेश्चतुर्भिर्भागे लब्धं चत्वारः शेषाङ्कश्च चतुश्छेदास्त्रयस्तल्लब्धमुपरि चत्वारस्तस्याधस्त्रयस्तदधश्चत्वारो यथा {४ / ३ / ४} । एते पादोनपञ्चभिन्नवर्गमूलं जातं परमायाति चत्वारि रूपाणि चतुस्त्रिभागाधिकानि व्यवहारे पादोनपञ्च उच्यन्ते । एवं सर्वत्र ॥

द्वितीया रीतिरनुक्ताऽप्यत्र दर्श्यते यथा—द्वाविंशतिनवषोडशच्छेदाङ्कराशेर्भागानुबन्धरीत्या सवर्णितस्य जातमेकषष्टित्रिशतरूपस्य षोडशच्छेदस्यांशवर्गरूपस्य एतद्वर्गमूलेन पादोनपञ्चकलक्षणेन हृते यथा {० ५ / ३ / ४} । भागापवाहरीत्या जाता एकोनविंशतिश्चतुश्छेदा यथा {१९ / ४} । ततः "कृत्वा परीवर्तनमंश"मित्यादिना विपर्ययं कृत्वा यथा {४ / १९} । तत एकत्र सैकषष्टित्रिशती षोडशच्छेदा, परत्र एकोनविंशतिच्छेदा यथा {१९ / ४} । (चतु)र्णामङ्कानामपवृत्तिसहत्वादपवर्तनं यथा चतुर्णां चतुर्भागे जात एकः । षोडशानां चतुर्भागे जाताश्चत्वारः । सैकषष्टित्रिशतस्य शति(?)तमे भागे जाता एकोनविंशतिः, तथा एकोनविंशतिरेकोनविंशतितमे भागे जाता एको यथा {१९ / ४ | १ / १} । ततः "सङ्गुणनाभवो विधिः" इत्युक्त्या एकगुणा एकोनविंशतिश्चत्वारश्च गुणिते गुणको यातीति न्यायादेककौ गतौ । चतुर्भिरेकोनविंशतेर्भागे दत्ते लब्धं चत्वारः, शेषं च चतुश्छेदास्त्रयो यथा {४ / ३ / ४} । एतेन वर्गवद् भिन्नवर्गेऽपि भिन्नवर्गमूलेन हृते भिन्नवर्गमूलमायाति । प्रसिद्धं चैतद् येनाङ्केन गुण्यते तेनैव ह्रियते तदा स एव लभ्यत इति स्थितम् । एवं सर्वत्र ज्ञेयम् ॥

१ अनुष्टुप् । २ प्रेक्ष्यतामेकविंशं पृष्ठम् ।

अथ द्वितीयोदाहरणन्यासः $\left\{\begin{matrix}\text{७२}\\\text{१}\\\text{४}\end{matrix}\right\}$। भागानुबन्धत्वात् छेदनिघ्नेत्यादिना यथा चतुर्गुणा द्वासप्ततिर्जाता अष्टाशीत्यधि(क)द्विशती सैका एकोननवतिद्विशती। अस्याश्च समविषमेत्यादिप्रक्रियया लब्धं पूर्वं सप्तविंशतिर्द्विनिघ्नेऽर्धित इति रीत्या जाताः सप्तदश। एतस्मिन्नंशवर्गमूले सप्तदशके छिद्वर्गमूलेति छिद्वर्गश्चतुष्कस्तस्य मूलं द्वौ, ताभ्यां हृते। अयमर्थः—द्वाभ्यां सप्तदशकस्य भागे लब्धं ८ अष्टौ, शेषं द्विच्छेद एको लब्धा चाष्टावुपरि योज्या यथा $\left\{\begin{matrix}\text{८}\\\text{१}\\\text{२}\end{matrix}\right\}$।

तृतीयोदाहरणन्यासः $\left\{\begin{matrix}\text{१}\\\text{९}\end{matrix}\right\}$। अंशवर्गमूले एकस्य एकस्मिन्नेव स्थिते छिद्वर्गमूलेति छिद्वर्गो नवकस्तस्य मूलं त्रयः, तैर्हृते लब्धं रूपस्य तृतीयो भागो यथा $\left\{\begin{matrix}\text{१}\\\text{३}\end{matrix}\right\}$।

चतुर्थोदाहरणं(ण)न्यासः $\left\{\begin{matrix}\text{१}\\\text{४}\end{matrix}\right\}$। अत्राप्यंशवर्गमूल इति पूर्ववदेक एव वर्गमूलम्। तत्र छिद्वर्गमूलेति छिद्वर्गः चतुष्कस्तस्य मूलं द्वौ, ताभ्यां हृते तदेव लब्धं यथा $\left\{\begin{matrix}\text{१}\\\text{२}\end{matrix}\right\}$। एवं भिन्नवर्गमूलम्॥

अथ भिन्नघने करणसूत्रं वृत्तार्धमाह—

**छिदो घनेनांशघने विभक्ते, भिन्नं घनं गाणितिका वदन्ति॥४१॥**[1]

व्याख्या—अधस्तनाङ्कश्छित् तस्य घनेन सदृशाङ्कत्रिराशिघातलक्षणेन उपर्यङ्कांशस्तस्य घने सदृशत्रिराशिघातलक्षणे विभक्ते दशभागे भिन्नं घनं गाणितिका–गणितचारिणो वदन्तीति सण्टङ्कः।

अत्रोद्देशकवृत्ते एकं भागानुबन्धजात्याश्रयं द्वितीयं भागापवाहजात्याश्रयं तथा भागजात्याश्रयं द्व्याद्यपेक्षमुदाहरणद्वयमाह—

**घनं नवानां चरणाधिकानां**
**षण्णां तथा त्र्यंशविवर्जितानाम्।**
**आचक्ष्व विद्वन्! यदि वेत्सि पाटीं**
**षडंशकस्य त्रिलवस्य चैवम्॥ ४२॥**[2]

स्पष्टम्। प्रथमोदाहरणस्य न्यासः $\left\{\begin{matrix}\text{९}\\\text{१}\\\text{४}\end{matrix}\right\}$। अत्र भागानुबन्धत्वात् छेदनिघ्नेत्यादिना सवर्णिते जाताः सप्तत्रिंशच्चतुश्छेदाः। अयमङ्कः स्थानत्रये विलिख्य यथा $\left\{\begin{matrix}\text{३७}\\\text{४}\end{matrix}\middle|\begin{matrix}\text{३७}\\\text{४}\end{matrix}\middle|\begin{matrix}\text{३७}\\\text{४}\end{matrix}\right\}$ मिथो घाते यथा सप्तत्रिंशत् सप्तत्रिंशता गुणिता जाता एकोनसप्तत्यधि(क)त्रयोदशशती १३६९। इयमपि सप्तत्रिंशता गुणिता जाताः पञ्चाशत् सहस्राः षट्शती त्रिपञ्चाशच्च, यथा ५०६५३। अयं राशिरंशघनस्तस्मिन्नंशघने छिदो घनेनेति छित् चतुष्कस्तस्य घनो यथा त्रयाणां चतुर्णां मिथो घाते जाता चतुःषष्टिरनेन विभक्ते च्छाया (त्वय?)मर्थः पञ्चाशत् सहस्रेत्यादि। प्रागंश-

---

१-२ उपजातिः।

घनराशेश्चतुःषष्ट्यां छेदघनेन भागे लब्धं सप्तशत्येकाधि(क)नवतिरेकोनत्रिंशच्चतुष्षष्टिच्छेदा, यथा { ७९१ / २९ / ६४ } ।

द्वितीयोदाहरणमाह—षण्णां त्र्यंशेत्यादिन्यासः { ६ / ० १ / ३ }। भागापवाहित्वात् हरनिघ्नेत्यादिना त्रिगुणाः षट् जाता अष्टादश, एकापनयने जाताः सप्तदश त्रिच्छेदाः, यथा { १७ / ३ } । ततोऽंशघनार्थं स्थाप्यो घनोऽन्त्यस्येत्यादिविधिर्यथा अङ्करीत्या सप्तदशानामेकोऽन्त्यस्तस्य घन एक एव संस्थाप्यो यथा { १७ / १ } । अन्यत्र तस्य एकस्य कृतिरेक एव त्रिघ्नो जातास्त्रयः । अस्यादि सप्तकम् , तेन हतास्त्रयो जाता एकविंशतिस्ततो मूलस्थाने स्थानाधिकं { १७ / १ / २१ } । अन्यत्रादिमस्य सप्तकस्य कृतिः—वर्ग एकोनपञ्चाशत्, अन्त्येन एकेन हतास्तदवस्थौ च त्रिहता जातं सप्तचत्वारिंशदधि(क)शतम् । ततो मूलस्थाने स्थानाधिकं स्थाप्या, यथा { १७ / ११७ / २१ / १ } । आदेः सप्तकस्य घनस्त्रिचत्वारिंशदधि(क)त्रिशती मूलस्थाने स्थानाधिकं स्थाप्या यथा { १७ / ११७३ / २४४ / १३ } । एषां सर्वेषां योगे जाताः चतुःसहस्री नवशती त्रयोदश च । अयमंशघनाङ्कस्तत्रांशघने छिदो घनेति छिदः—छेदस्य त्रिकलक्षणस्य यो घनः सप्तविंशतिरूपस्तेन हृते । अयमर्थः—चतुःसहस्रप्रभृत्यंशघनाङ्कस्य सप्तविंशत्या छेदघनेन भागे लब्धं एकाशीत्यधि(क)शतम्, शेषाङ्कः षड्विंशतिः सप्तविंशतिच्छेदा, यथा { १८१ / २६ / २७ }, लब्धस्योपरि स्थाप्यमानत्वात् ।

तृतीयोदाहरणमाह—षडंशकस्येति । न्यासो यथा { १ / ६ } । अत्रांशघन एक एव । तत्रैकलक्षणांशघने छिदो घनेनेति छिदः षट्करूपस्य सदृशत्रिराशिघातात् षोडशाधि(क)द्विशतरूपो घनस्तेन हृते भाज्याभावात् तदेव लब्धं एकोऽंशः षोडशाधि(क)द्विच्छेदकः, यथा { १ / २१६ } ।

चतुर्थोदाहरणमाह—त्रिलवस्य चैवम् । न्यासः { १ / ३ } । अत्राप्येकलक्षण एवांशघने छिदो घनेनेति छिदस्त्रिकस्य घनेन सदृशत्रिराशिघातात् सप्तविंशतिलक्षणेन विभक्ते उपरि[illegible]भावादेतदेव लब्धं एकः सप्तविंशतिच्छेदः, यथा { १ / २७ } । एवं भिन्नघनः समाप्तः ॥

भिन्नघनमूलम्—

अथ भिन्नघने करणसूत्रं वृत्तार्धमाह—

लवघनमूले हरपदभक्ते । गणितविधिज्ञा घनपदमाहुः ॥ ४३ ॥[1]

व्याख्या—प्राग् लब्धभिन्नघनरूपाणामेकाधिकनवतिसप्तशती षड्विंशतिसप्तविंशतिच्छेदरूपप्रभृतीनां मध्ये ये उपर्यङ्कास्ते लवघनास्तेषां भागानुबन्धा-

---

१ शशिवदना । एतल्लक्षणम्—"शशिवदना न्यौ" ।

दिना सवर्णितए(? तै)काधि(क)नवतिसप्तशतादीनां यन्मूलं घनपदमघनपदेत्यादिना यल्लब्धमङ्कपदं तत्र घनलवमूले हरः अधस्तनोऽङ्कश्चतुःषष्टिप्रभृतिस्तस्य पदं—मूलं चतुष्कादि तेन भक्ते हरपदविभक्ते गणितविधिज्ञा घनपदं—भिन्नघनमूलमाहुरिति सण्टङ्कः ।

अत्रोद्देशकश्लोकः—

प्राचीनघनराशीनां, ब्रूहि मित्र! पदानि मे ।
घनमूलविधाने च, प्रभूता यदि ते मतिः ॥ ४४ ॥[1]

(व्याख्या—) प्राचीनघनराशीनां प्रागुक्त एकनवत्यधि(क)सप्तशतादिराशीनां पदानि—मूलानि चरणाधिनवप्रभृतीनि ब्रूहीति सम्बन्धः । शेषं स्पष्टम् ।

प्रथमोदाहरणम् । न्यासः {७९१ / २९ / ६४} । अत्र भागानुबन्धत्वात् छेदनिघ्नेत्यादिना चतुःषष्ट्या उपर्यङ्को गुणितो जातः सहस्राः पञ्चाशत् षट्शती चतुर्विंशतिश्च । एकोनत्रिंशत्क्षेपे जाता पर्यन्तात्रिपञ्चाशत्, यथा ५०६५३ । अस्य लवघनस्य सवर्णितस्य मूलानयनाय घनोऽघनद्वन्द्वेत्यादिना पञ्चाशत्सत्कशून्याधःपर्यन्तघनपदम्, ततो यस्याङ्कस्योपरि घनो याति तमधः कृत्वा घनमपनयेत्, यथा—५०६५३ त्रिकघनं सप्तविंशतिः, पञ्चाशन्मध्यादपनीतायां शेषं स्थिता त्रयोविंशतिः । ततस्त्रिकं मूलसञ्ज्ञं त्रिपञ्चाशत्सत्कपञ्चकाधो नयेत्, यथा {२३६५३ / ३} । ततोऽस्य कृतिर्नव त्रिघ्नी जाता सप्तविंशतिस्तया त्रिकात् पूर्वन्यस्तया शेषमङ्कराशिं हरेत्, यथा {२३६५३ / २७३} । ततः सप्तविंशत्यधः सप्तकेन भागे गतमेकोननवतिशतम्, स्थितं शेषं पञ्चचत्वारिंशत् । उक्तार्थत्वाच्च सप्तविंशतिर्भज्यते {४७५३ / ३} । लब्धं च सप्तकं पङ्क्त्यां त्रिकाग्रतो नियोज्य यथा {४७५३ / ३७} । ततोऽन्यतत्कृतिमित्यादि तस्य सप्तकस्य कृतिरेकोनपञ्चाशल्लक्षणो वर्गः, तमन्त्यत्रिकेण हत्वा जातः सप्तचत्वारिंशदधि(क)त्रिशती, यथा {३४३ / ३७} । घनं चेति आदेः सप्तकस्य घनं त्रिचत्वारिंशदधि(क)त्रिशतीमपनयेत् । त्रिर्गमयेत् । लब्धं सप्तत्रिंशत् । एतत्सप्तशतप्रभृतितदधः सप्तविंशतिच्छेदा घनमूलम् । तत्र लवघनमूले हरपदेति हरश्चतुःषष्टिस्तस्य मूलं चतुष्कं तेन भक्ते । अयमर्थः—सप्तत्रिंशतश्चतुष्केण भागे लब्धं नव ९ शेषे चैकश्चतुश्छेदः, लब्धं चोपरि नियोज्यमिति सर्वत्र ज्ञेयम्, यथा {९ / १ / ४} ।

द्वितीयोदाहरणम् । न्यासः {१८१ / २६ / २७} । भागानुबन्धत्वात् छेदनिघ्नेत्यादिना सप्तविंशत्या एकाशीत्यधि(कं) एकं शतं गुणितं जाताः सहस्राश्चत्वारोऽष्टशती सप्ताशीतिश्च । ततः षड्विंशत्क्षेपे जाता चतुःसहस्री नवशती त्रयोदश । तदधः सप्तविंशतिच्छेदा यथा {४९१३ / २७} । अस्य लवघनस्य त्र्यंशवर्जितपदलक्षणमूलान-

[1] अनुष्टुप् ।

यनाय सूत्रेऽनुक्ताऽप्यन्या प्रक्रिया दर्श्यते । यथा—त्र्यंशविवर्जिताः षट् मण्डनीया यथा { ० ६ १ ३ } । अयं च भिन्नघनमूलराशिर्भागापवाहजातित्वात् हरनिघ्नेत्यादिना त्रिगुणाः षट् जाता अष्टादश, एकापनयने सप्तदश त्रिच्छेदाः, यथा { १७ ३ } । ततः सप्तदशभिः सप्तदशगुणने जातो वर्ग एकोननवत्यधि(क)द्विशती । त्रिगुणाश्च त्रयो नव यथा { २८९ ९ } । ततो भागहारोक्त“कृत्वा परीवर्तन”मित्यादिना हरस्यास्य भागदायिनोऽङ्कस्य परीवर्तनं कृत्वा यथा एकोननवत्यधि(क)द्विशती अधो नव चोपरि यथा { ९ २८९ } । तत एकपक्षे चतुःसहस्री नवशती त्रयोदश सप्तविंशतिच्छेदा यथा { ४९१३ २७ }, एकत एकोननवत्यधि(क)द्विशती उपरिस्थनवाङ्का यथा { ९ २८९ } । एते चत्वारोऽप्यङ्का अपवृत्तिसहाः । अपवृत्तिश्च द्वयोरङ्कयोरेव सादृश्येनैकेनाङ्केन कार्या । ततश्चतुःसहस्रप्रभृत्यङ्कस्य एकोननवत्यधि(क)द्विशत्या अपवर्तिते जाताः सप्तदश । तथा एकोननवत्यधि(क)द्विशत्या आत्मनैवापवर्तने जात एककः । तथा नवानां नवमभागे एकः । तथा सप्तविंशतेर्नवभागापवर्तने जातास्त्रयो यथा { १७ ३ | १ १ } । तत एकगुणनाय भाज्यो हरश्च स एव । ततः सप्तदशानां त्रिभिर्भागे लब्धं पञ्चकम्, शेषं द्वौ त्रिच्छेदौ, यथा { ५ २ ३ } । अत्र च कुलिशापवर्तनं दर्शितं वामदक्षिणाङ्कापवर्तनात् । अनपवर्तितेन च यथा—एकतश्चतुःसहस्री नवशती त्रयोदश सप्तविंशतिच्छेदा । ततः ‘कृत्वा परीवर्त’-त्यादिनोपरि नव, अध एकोननवतिः द्विशती । ततो नवभिर्गुणितश्चतुःसहस्रादिरङ्को जातः, यथा ४४२१७ चतुश्चत्वारिंशत् सहस्रा द्वे शते सप्तदश च । गुणकनवको गतः । तथा सप्तविंशतिगुणा एकोननवतिद्विशती जाताः सहस्राः सप्ताष्टशती त्र्यधिका, यथा ७८०३ । गुणकसप्तविंशतिर्गता, ततः सप्तसहस्रादिना चतुश्चत्वारिंशदादेर्भागे लब्धं पञ्च शेषाङ्कसहस्राः पञ्च द्वे शते द्व्यधिके, यथा { ५२०२ ७८०३ } । तत उपर्यङ्कस्य द्विसहस्रषट्शतैककेनापवर्तने जाता २ अनेनैना(व ?) द्विसहस्रादिना २६०१ अधस्तनाङ्कस्यापवर्तने जातास्त्रयस्ततो लब्धस्योपरि न्यासः, यथा { २ ५ ३ } । एतेन घनवद् भिन्नघनस्यापि मूलं ज्ञात्वा तद्वर्गेण भिन्नघनाङ्कस्य भागे भिन्नघनमूलमायातीति स्थितम् ।

अथ तृतीयोदाहरणन्यासः { १ २१६ } । अत्र लवघन एकः । एतस्य मूलमप्येकः शून्यपदविकारितादेकस्मिन् लवघनमूले हरपदेति हरः षोडशाधि(क)द्विशती, तन्मूलं षट्, तेन विभक्ते भाज्याभावादेतदेव लब्धम्, यथा { १ ६ } ।

चतुर्थोदाहरणन्यासः { १ २७ } । अत्रापि पूर्ववल्लवघनमूले एकलक्षणे हरपदे हरः सप्तविंशतिस्तत्पदं त्रिकं तेन भक्ते पूर्ववत् तदेव लब्धं भागजात्यद्यविना-

खेनोद्धृतान् दश च कः खगुणो निजार्ध-
युक्तस्त्रिभिश्च गुणितः खहृतास्त्रिषष्टिः ॥"[1]

न्यासः—{०} एतत् पञ्चयुतं जातं पञ्च, यथा ५। खवर्गन्यासः {०}। खवर्ग-मूलन्यासः {०}। खघनन्यासः {०}। खघनमूलन्यासः {०}। खगुणाश्च पञ्च खमेव न्यासः {०/५ | ०}। खेनोद्धृतान् दश च। खभक्ता दश खमेव। न्यासः {१०/० | ०}। तथाऽङ्कोऽङ्कोऽज्ञातोऽपि खगुणो निजार्धेन मूलवृत्त्या सप्तादिना युतस्त्रिगुणः सन् खहृतास्त्रिषष्टिर्दृश्यतया वर्तते। तथाहि चतुर्दशाङ्कः खगुणः {०/१४}। अयं निजार्धेन चतुर्दशार्धेन—सप्तकेन युतो जात एकविंशतिः, त्रिगुणतया जाता त्रिषष्टिः। ततः खहृतास्त्रिषष्टिरेव अविकारी राशिः खस्थितो गुणकस्य भाग-स्योपर्यधःशून्यत्वात् न्यासः, यथा {६३/०}। एतदुदाहरणप्रपञ्चशेषं लीलावती-वृत्तौ ज्ञेयम्। अत्र ग्रन्थगौरवं स्यात् इति शून्यव्याप्तिरष्टपरिकर्मगता समाप्ता॥

कलासवर्णे भागजातिः—

अथ रूपाणां ये भागा [भाग]भागभागा वा अधिका वा भागा अपवाह्या वा भागास्तेषां गुणनादि कथं स्यादित्याशङ्क्याह। अतः परं कलासवर्णनमारभ्यते। स्पष्टम्। तत्रादौ भागजातौ करणसूत्रं वृत्तार्धमाह—

अंशच्छेदौ छेदनाभ्यां विहन्यादन्योन्यस्य छेदसादृश्यहेतोः।[2]

व्याख्या—उपर्यङ्कोऽंशः। अधोऽङ्कश्छेदः। ततो भाग अङ्कद्वयापेक्षित्वात् स्थानद्वये लिखितावंशच्छेदौ छेदनाभ्यामन्योन्यस्येति छेदाभ्यां मिथो विह-न्यात् प्राच्यांशच्छेदौ अग्रेतनाङ्कच्छेदेन तथा अग्रेतनांशच्छेदौ प्राच्याङ्कच्छेदेन गुणयेत्। यथा उभावपि छेदौ मिथो गुणितौ सदृशौ भवतः, अंशास्तु भवन्तु मा वेत्यर्थः॥

अत्रोद्देशकवृत्तेनैकमुदाहरणमाह—

दलं त्रिभागश्चरणः षडंशः, पञ्चांशकः सप्तमभाग एव।
भागानमून् तुल्यहरान् प्रचक्ष्व, कलासवर्णे यदि कौशलं ते॥[3]

व्याख्या—रूपस्य दलं रूपस्य त्रिभाग इत्यादि योज्यम्। शेषं स्पष्टम्। न्यासः {१/२ | १/३ | १/४ | १/६ | १/५ | १/७}। अत्र भागजातित्वान्मिथोऽङ्कद्वयस्य २ प्रक्रिया कार्या। तथाद्वि-(हि?) प्रथममङ्कद्वये मिथच्(श्?)छेदनाभ्यां यथा द्विकाधस्त्रिकं त्रिकाधो द्वौ तयो-र्यथा {१/२/३ | १/३/२}। ततस्त्रिगुण एको जातास्त्रयः, त्रिगुणौ द्वौ जाताः षट्। तथा द्विगुण

---

१ वसन्ततिलका। २ शालिनी। ३ उपजातिः।

एको जातौ द्वौ, द्विगुणास्त्रयो जाताः षट्, यथा {३/६/३ | २/६/२}। ततः समानषडङ्कद्वयच्छेदत्वादुपर्यंशत्रयमध्ये द्विक्षेपे जाताः पञ्च षट्छेदाः। शेषं भञ्जनीयं यथा {५/६}। ततोऽग्रेतनाङ्कैकचतुश्छेदात् चतुष्कः षट्काधश्चतुष्काधः षट्को नेयः, यथा {५/६/४ | १/४/६}। अत्रार्धापवर्तने षण्णां त्रयश्चतुर्णां द्वौ कार्यौ, यथा {५/६/२ | १/४/३}। ततो द्विगुणाः पञ्च जाता दश। द्विगुणाः षट् जाता द्वादश। पराङ्के त्रिगुण एको जातास्त्रयस्त्रिगुणाश्चत्वारो जाता द्वादश, यथा {१०/१२/२ | ३/१२/३}। तत उपर्यंशदशमध्ये त्रिक्षेपे जाता उपरि त्रयोदश, अधो द्वादश, शेषं गतम्, यथा {१३/१२}। अथाग्रेतनाङ्कैकषट्छेदात् षड्भागापवर्तने न नैको द्वादशाधस्तथा द्वादशानां षड्भागापवर्तने द्वौ षडधो नेयौ, यथा {१३/१२/१ | १/६/२}। ततः प्रागङ्क एकगुणस्तथैव, पराङ्को द्विगुण एको द्वौ। द्विगुणाः षट् जाता द्वादश, यथा {१३/१२/१ | २/१२/२}। ततः सदृशच्छेदत्वादुपर्यंशत्रयोदशमध्ये द्विक्षेपे जाताः पञ्चदश द्वादशच्छेदाः, शेषं गतम्, यथा {१५/१२}। अथाग्रेतनाङ्कैकपञ्चकच्छेदात् पञ्चको द्वादशाधो द्वादश च पञ्चाधो नेयाः, यथा {१५/१२/५ | १/५/१२}। ततः पञ्चगुणाः पञ्चदश जाताः पञ्चसप्ततिः। पञ्चगुणा द्वादश जाताः षष्टिः। पराङ्के द्वादशगुण एको जाता द्वादश। (द्वादश)-गुणाः पञ्च जाताः षष्टिः, यथा {७५/६०/५ | १२/६०/१२}। सदृशच्छेदत्वादुपर्यंशपञ्चसप्ततिमध्ये द्वादशक्षेपे जाता सप्ताशीतिः षष्टिच्छेदाः, शेषं गतम्, यथा {८७/६०}। अथाग्रेतनाङ्कैकसप्तच्छेदात् सप्त षष्ट्यधः षष्टिश्च सप्ताधो नेया, यथा {८७/६०/७ | १/७/६०}। ततः सप्तगुणा सप्ताशीतिर्जाताः षट्शती नवाधिका। तथा सप्तगुणा षष्टिर्जाता विंशत्यधि(क)चतुःशती। पराङ्के षष्टिगुण एको जाता षष्टिः। षष्टिगुणाः सप्त जाता विंशत्यधि(क)चतुःशती, यथा {६०९/४२०/७ | ६०/४२०/६०}। सदृशच्छेदत्वात् षट्शत नवाधि[1]...............षट्शती विंशत्यधि(क)चतुश्छेदा। शेषं गतम्, यथा {६६९/४२०}। ततो द्वे शते[2]......ऽस्य त्रिभागे[3]...भागाप[4]...जातं चत्वारिंशदधि-(क)शतं क्रमेण लब्धं यथा {१८३/१४०}।[5]...एते रूपभागाः। अत्रानुक्ताऽपि[6]...... ............मार्या प्रदर्श्यते—

**अधरहरेणोर्ध्वांशान्, ऊर्ध्वहरेणाधरं हरं हन्यात्।**
**मध्यांशहराभ्यासं, विनिक्षिपेदुपरिमांशेषु ॥**[7]

व्याख्या—भागजातिरङ्कद्वयापेक्षेति कृत्वा ऊर्ध्वगत्या अंशच्छेदयोर्युगलकम्। ततः प्रथममंशच्छेदयुगमूर्ध्वसञ्ज्ञं द्वितीयमंशहरयुगमधरसञ्ज्ञम्। ततोऽधरहरेण—अधरछेदेन ऊर्ध्वांशान् हन्यात्। ऊर्ध्वहरेण—ऊर्ध्वाङ्कच्छेदेनाधरं हरं—अधोऽङ्कच्छेदं

१ अक्षराणि न दृश्यन्ते, अस्पष्टत्वात्। तथापि 'नवाधिमध्ये षष्टिक्षेपे जाता एकोनसप्तत्यधिका' इति पाठःसम्भाव्यते। २–६ अक्षराणामस्पष्टत्वात् नावगम्यते पाठः। ७ आर्या।

हन्यात्। ततो मध्ये यदङ्कमूर्ध्वाङ्कस्य हरः अधोऽङ्कस्य चांशस्तयोरभ्यासमूर्ध्वहरेणाधस्तनांशगुणने तन्निष्पन्नोऽङ्कोऽपि मध्यांशहराभ्यस्तमुपरिमांशेषु अधरहरगुणितेषु निक्षिपेत् । उदाहरणवृत्तेषु प्राक्तनन्यासश्चोर्ध्व[हरस्य द्विकस्या]गत्याऽङ्कश्रेणेः {१/२ १/३} । अत्राधरहरस्त्रयस्तद्गुण ऊर्ध्वांश एको जातास्त्रयः । ऊर्ध्वहरेण द्विकेन अधरं हरं त्रिकं हन्यात्, जाताः षट् । मध्यांशहरयोरधोऽङ्केनोर्ध्वहरस्य द्विकस्याभ्यासे गुणनं तदेव द्विकमूर्ध्वांशत्रिकमध्ये निक्षिपेत्। जाताः पञ्च षट्छेदा यथा {५/६} । अस्याश्चरणौ यथा {५/६ १/४} अधरहरेण चतुर्भिरूर्ध्वांशान् हन्यात् । पञ्च जाता विंशतिः, ऊर्ध्वहरेण षड्भिरधरहरं चतुरो हन्यात्। जाताश्चतुर्विंशतिः। मध्यांशहराभ्यासं एकगुणषट्कं तदेवोपरिमांशविंशतौ निक्षिपेत्। जाता षड्विंशतिश्चतुर्विंशच्छेदा, यथा {२६/२४} । अस्याधः षडंशो यथा {२६/२४ १/६} । अधरहरेण षड्भिः ऊर्ध्वान् षड्विंशतिं हन्यात् । जातं षट्पञ्चाशदधि(क)शतम् । ऊर्ध्वहरेण चतुर्विंशत्या अधरहरषट्कं हन्यात् । जातं चतुश्चत्वारिंशदधि(क)शतम् । मध्यांशहराभ्यासं एकगुणचतुर्विंशति उपरिमांशेषु षट्पञ्चाशदधि(क)शते निक्षिपेत् । जातमशीत्यधि(क)शतं चतुश्चत्वारिंशत्श(च्छ)तच्छेदम्, यथा{१८०/१४४ १/५} अधरहरेण पञ्चभिरूर्ध्वांशानशीत्यधि(क)शतं हन्यात् । जातानि नव शतानि । ऊर्ध्वहरेण चतुश्चत्वारिंशदधि(क)शतेनाधरं हरं पञ्चकं हन्यात् । जाता विंशत्यधि(क)सप्तशती । मध्यांशहराभ्यासमेकगुणचतुश्चत्वारिंशदधि(क)शतमुपरिमांशेषु नवशत्यां निक्षिपेत् । जातं चतुश्चत्वारिंशदधि(क)सहस्रमेकं विंशत्यधि(क)सप्तशतच्छेदम्, यथा {१०४४/७२०} । अस्याधः सप्तमभागः, यथा {१०४४/७२० १/७}। हरेण सप्तभिर्गुणितमूर्ध्वांशचतुश्चत्वारिंशदधि(क)सहस्रं जातं अष्टोत्तरत्रिशताधि(क)सप्तसहस्रा ऊर्ध्वहरेण विंशत्यधि(क)सप्तशत्या अधरहरं सप्तकं हन्यात्। जाता चत्वारिंशदधि(क)पञ्चसहस्री। मध्यांशहराभ्यासं एकगुणविंशत्यधि(क)सप्तशतलक्षण उपरिमांशेषु अष्टोत्तरत्रिशताधि(क)सप्तसहस्रेषु निक्षिपेत् । जाता अष्टाविंशत्यधि(क)सहस्राष्टकचत्वारिंशदधि(क)पञ्चसहस्रच्छेदम्, यथा {८०२८/५०४०} । अधोऽङ्केनोपर्यङ्कस्य भागे लब्धं रूपमेकं उपरि च शेषाङ्कोऽष्टाशीत्यधि(क)नवशतोत्तरद्विसहस्री, यथा २९८८। अस्य षट्त्रिंशताऽपवर्ते जाता त्र्यशीतिः, अधोऽङ्कस्य चत्वारिंशदधि(क)पञ्चसहस्रस्य षट्त्रिंशता अपवर्तिते जातं चत्वारिंशदधि(क)शतमेकं यथा {१/१} रूप {८३/१४०} । एते रूपं........विंशतिरेकोनैकश्चतुर्विंशतिछेदः, यथा {१/२४} ।

---

१ अतः परं हस्तलिखितप्रतौ चतुःषष्टितमपत्राभावः ।

अथ द्वितीयपदव्याख्या—अन्येन द्रम्मस्याष्टमभागस्तस्य पञ्चमो लवस्तस्य त्र्यंशो यस्तस्यार्धं यत् तस्य षड्भागको दत्तः, न्यासो यथा { १/८ | १/५ | १/३ | १/२ | १/६ } । एतेनैकोऽङ्कः साध्यः, तथाहि—अंशानामेकानामभ्यासं—गुणनं कुर्यात् । जात एक एव । छेदसंवर्गं च कुर्यात्, यथा—अष्टगुणाः पञ्च जाताश्चत्वारिंशत्, तथा चत्वारिंशद्-गुणास्त्रयो जातं विंशत्यधिकं शतमेकम्, तथा विंशत्यधि(क)शतैकेन गुणितौ द्वौ जाता चत्वारिंशदधि(क)द्विशती, अनया गुणिताः षट् जातानि चत्वारिंशदधि-(क)चतुर्दशशतानि । ततो जात एकश्चत्वारिंशदधि(क)चतुर्दशशतच्छेदः, यथा { १/१४४० } ॥

अथ तृतीयपदव्याख्या—एकस्य द्रम्मस्य योऽंशस्तस्य योऽष्टमस्तस्य यश्चतुर्थो भागस्तस्य यो दशमो भागस्तं ददौ । अपरः न्यासः { १/७ | १/८ | १/४ | १/१० } । एतेनैकोऽङ्कः साध्यः, तथाहि—अंशानां एकानामभ्यासं कुर्यात् । जात एक एव । छेदसंवर्गं कुर्यात्, यथा सप्तगुणा अष्टौ जाता षट्पञ्चाशत्, तथा षट्पञ्चाशद्गुणाश्चत्वारो जाता चतुर्विंशत्यधि(क)द्विशती, अनया गुणिता दश जाता चत्वारिंशदधि(क)द्विशतोत्तर-द्विसहस्री । एतच्छेदश्चैकः, यथा { १/२२४० } । ततोऽमीषां त्रिपदजातानां त्रयाणा-मङ्कानां सवर्णनाय न्यासः { १/२४ | १/१४४० | १/२२४० } । एतेन प्रभागजातकरणभागजा-तिर्जाता । ततोऽंशच्छेदादावित्यादिना द्वयोरंशच्छेदयुगयोश्छेदानां विनिमयेऽप-वर्ते च यथा चतुर्विंशतेरपवर्ते शत एकः, स चत्वारिंशदधि(क)चतुर्दशशताधः । तथा चत्वारिंशदधि(क)चतुर्दशशतानां चतुर्विंशत्याऽपवर्ते जाता षष्टिः । स(सा) चत्वारिंशदधश्चतुःशताधः, यथा { १/२४/६० | १/१४४०/१ } । षष्टिगुण एको जाता षष्टिः । षष्टिगुणा चतुर्विंशतिर्जाता चत्वारिंशदधि(क)चतुर्दशशतानि, यथा { ६०/१४४० } । द्वितीयोऽङ्कगुणस्तथैव, सदृशच्छेदत्वात् । षष्टिमध्ये एकक्षेपे जाता एकषष्टिश्चत्वा-रिंशदधि(क)चतुर्दशशतच्छेदा, यथा { ६१/१४४० } । शेषं विनष्टम् । अथाग्रेत-नाङ्कसवर्णनार्थं द्वयोरपि छेदयोः षष्ट्याधि(क)शतेनापवर्ते चत्वारिंशदधि(क)-चतुर्दशानां जाता नव, तथा चत्वारिंशदधि(क)द्वाविंशतिशतानां जाता चतुर्दश । ततोऽंशच्छेदावित्यादिना छेदविनिमये यथा—{ ६१/१४४०/१४ | १/२२४०/९ } ।

ततश्चतुर्दशगुणा एकषष्टिर्जाता चतुःपञ्चाशदधि(क)शताष्टकम् । तथा चतुर्दशगुणा चत्वारिंशदधि(क)चतुर्दशशती जाता विंशतिसहस्रा षष्ट्यधि(क)शतमेकं पराङ्कं । नवगुण एको जाता नव । तथा नवगुणं चतुर्दशशतादि[1] जाता विंशतिसहस्रादि, यथा { ८५४/२०१६० | ९/२०१६० } । तत उपरिमांशद्वयत्या(?यो)गे जातं त्रिषष्ट्यधि(क)शता-

१ 'द्वाविंशतिशतादि' इति भाति ।

ष्टकं विंशतिसहस्रादिच्छेदम् । शेषं विनष्टम्, यथा { ८६३ / २०१६० } । उपर्यङ्कः स्तोकत्वाद् भागं न सहते, यतः पूर्णरूपप्रायस्ततो यथाभागयोग्यः स्यात् तदर्थं पणरूपः कार्यः प्रथमं यतः षोडशपणैरेको द्रम्मः । ततः षोडशगुणं त्रिशष्ट्यधि(क)शताष्टकं जातं त्रयोदश सहस्रा अष्ट शतान्यष्टौ च, यथा १३८०८ । इयताऽपि न भागसहस्ततः काकिणीरूपः कार्यः । पणश्चतुःकाकिणीकस्ततश्चतुर्गुणं त्रयोदशसहस्रादि जातं पञ्चपञ्चाशत् सहस्रा द्वे शते द्वात्रिंशच्च । अस्य विंशतिसहस्राद्यङ्केन भागे यथा { ५५२३२ / २०१६० } । लब्धं द्वे काकिण्यौ यथा २, उपरि शेषाङ्कश्चतुर्दश सहस्रा नवशती द्वादश च । अयं स्तोकत्वाद् भागं न सहते, (अतः) कपर्दरूपः कार्यः, यतो विंशत्या कपर्दैः काकिण्येका स्यादिति विंशतिगुणश्चतुर्दशसहस्रादि जातौ द्वौ लक्षौ अष्टनवतिसहस्रा द्वे शते चत्वारिंशत् । अस्य विंशतिसहस्रादिना भाग(गे) { २९८२४० / २०१६० } लब्धं चतुर्दश कपर्दकाः, यथा १४ । उपरि शेषाङ्कः षोडश सहस्राः १६००० । तत उपर्यधोऽङ्कयोर्विंशत्यधि(क)त्रिशत्याऽपवर्ते उपरि जाता पञ्चाशत् अधश्च त्रिषष्टिः, यथा { ५० / ६३ } । एवं प्रभागजातिः समाप्ता ॥

अथ भागानुबन्धजातौ करणसूत्रं वृत्तमाह—

छेदनिघ्नेषु रूपेषु भागं क्षिपे–च्छेदनं छेदनेनैव हत्वाऽंशकम् ।
सांशकाधो हरेणाद्यमाहन्यते, नूनमंशानुबन्धाख्यजातेर्विधौ ॥[1]

व्याख्या—यत्रांशच्छेदा भागानुबन्धिनो भवन्ति भागानुबन्धश्च रूपानुबद्ध एव ततः छेदनिघ्नेषु रूपेषु–छेदगुणितेषु रूपेषु उपरिस्थेषु भागं–तद्रूपानुबन्धिनं भागं निक्षिपेदिति शुद्धभागजात्याश्रयमुक्तम् । यदि भागास्तावद्रूपानुबद्धास्ततो भागानुबद्धरूपस्य भागा एव बहुभागानु(बन्ध)यायिनो भागानुबन्धराशयो भवन्ति तदा किमित्याह—छेदेत्यादि । अधोऽंशच्छेदनेनोपरिमांशच्छेदनं हत्वा–गुणयित्वा सांशकाधोहरेण–अधोहरमध्यक्षिप्ताधोऽंशेनोपर्यंशमाहन्यते–गुण्यते तदधोऽङ्को विनश्यति गुणकत्वादुपर्यंशच्छेदौ तिष्ठतः । एवमग्रेतनाङ्केष्वपि विधिः कार्यः । नूनमंशेत्यादि स्पष्टम् ॥

पूर्वं प्रथमपदोदाहरणं वृत्तेनाह—

सचरणदशरूपमर्धयुक्तं, त्रिलवयुतं द्वितयं च हे सखे! ।
कथय मम सवर्णनं हि कृत्वा, यदि गणिते विद्यते श्रमस्ते ॥[2]

चरणसहितानि दशरूपाणि तथा अर्धयुक्तं रूपमेकं तथा त्रिलवयुतं द्वितयं च कथय । शेषं स्पष्टम् । न्यासः { १० / १ / ४ | १ / १ / २ | २ / १ / ३ } । अत्र विधिर्यथा–प्रथमाङ्के छेदा-

---

१ स्रग्विणी । एतल्लक्षणमेवम्–"कीर्तितैषा चतूरेफिका स्रग्विणी" । २ मात्रासमकम् ।

श्चत्वारस्तन्निघ्नानि रूपाणि दश जाता चत्वारिंशत् । अस्य मध्ये भागैकक्षेपे जाता एकचत्वारिंशत् चतुच्छेदाः, यथा { ४१ / ४ } । द्वितीयाङ्के द्विच्छेदनिघ्न एको जातौ द्वौ । भागैकक्षेपे जातास्त्रयो द्विच्छेदाः, यथा { ३ / २ } । अत्र छेदयोश्चतुर्द्विकयोरर्धापवर्तने जातैकद्विकयोर्विनिमये यथा { ४१ / ४ / १ | ३ / २ / २ }। "अंशच्छेदा"वित्यादिना पूर्वाङ्के गुणिते तदेव, पराङ्के द्विगुणास्त्रयो जाताः षट्, द्विगुणौ द्वौ जाताश्चत्वारः। समच्छेदत्वादेकचत्वारिंशन्मध्ये क्षेपे जाताः सप्तचत्वारिंशत् चतुश्छेदाः। शेषं विनष्टम्, यथा { ४७ / ४ } । अथाग्रेतनाङ्के यथा { २ / १ / ३ } । अत्र छेदेन त्रिभिर्निघ्नरूपद्वये जाताः षट्, भागैकक्षेपे जाताः सप्त त्रिच्छेदाः, यथा { ७ / ३ } । ततोऽत्र छेदादावित्यादिना चतुस्त्रिच्छेदयोर्विनिमये यथा { ४७ / ४ / ३ | ७ / ३ / ४ } । त्रिगुणाः सप्तचत्वारिंशत् जातमेकचत्वारिंशदधि(क)शतमेकम्, त्रिगुणाश्चत्वारो जाता द्वादश, यथा { १४१ / १२ } । पराङ्के चतुर्गुणाः सप्त जाताऽष्टाविंशतिः, चतुर्गुणास्त्रयो जाता द्वादश[1] । समच्छेदत्वात् प्रागेकचत्वारिंशदधि(क)शतमध्येऽष्टाविंशतिक्षेपे जातमेकोनसप्तत्यधि(क)शतमेकं द्वादशच्छेदम्, यथा { १६९ / १२ } । शेषं विनष्टम् । अधोऽङ्केनोपर्यङ्कस्य भागे लब्धं चतुर्दश शेषं चैको द्वादशच्छेदः, यथा { १४ / १ / १२ } ।

अथ भागानुबन्धभागोदाहरणं रूपरहितभागानुबन्धि भागानुबन्धसहिताङ्कं वक्तुं वृत्तमाह—

> **सपादरूपं स(स्व?)दलार्धकं च, स्वस्य त्रिभागं स्वषडंशयुक्तम् ।**
> **त्र्यंशं षडंशेन युतं स्वकीय–पादाधिकं ब्रूहि सवर्णयित्वा ॥**[2]

व्याख्या—पूर्वं सचतुर्भागं रूपं स्वदलेति सपादरूपस्य यदर्धं स्यात् तेनाधिकं सस्वत्रिभागमिति सपादरूपस्य स्वार्धयुक्तस्य यस्त्रिभागस्तेन सहितम् । तथा स्वषडंशेति सपादरूपस्य स्वार्धयुक्तसस्वत्रिभागस्य यः स्वीयः षडंशस्तेन युक्तं यत् रूपप्रतिबद्धभागोपदर्शनम् । अतो भागानुबद्धभागा यथा त्र्यंशमिति रूपस्य यस्त्र्यंशस्तं षडंशे(ने)ति त्र्यंशस्य यश्च षडंशस्तेन युतं त्र्यंशं स्वकीयपदेति षडंशयुतस्य त्र्यंशस्य यः पादः-चतुर्भागस्तेनाधिकं त्र्यंशं सवर्णयित्वा ब्रूहीति क्रिया । अत्रोर्ध्वगत्या प्रथमं शृङ्खलाकलितभागानुबन्धन्यासः, यथा | १ / १ / ४ / १ / २ / १ / ३ / १ / ६ | ।

अत्र सम्पूर्णीकरणवृत्तप्रक्रिया दर्श्यते । तत्र प्रथमं छेदाश्चत्वारस्तन्निघ्नं रूपमेकं जाताश्चत्वारः । एतन्मध्ये भागमेकं क्षिपेत् । जाताः पञ्च चतुश्छेदाः, यथा { ५ / ४ } ।

---

१ यथा { २८ / १२ }। । २ उपजातिः ।

अस्यार्धं स्वार्धम्, यथा {५ / ४ / १ / २}। ततश्छेदनमुपरि चतुर्लक्षणं छेदनेन–अधोऽङ्कद्विकेन हत्वा जाता अष्टौ। अधोहरो द्विलक्षणः सांशकः स्वकीयैकांशयुतो जातास्त्रयः। तेन आद्यमंशकं पञ्चकमाहन्यते, जाताः पञ्चदशाष्टछेदाः, शेषं गुणकत्वाद् विनष्टम्, यथा {१५ / ८}। अस्याधः स्वत्र्यंशः, यथा {१५ / ८ / १ / ३}। अत्र छेदनमष्टलक्षणं छेदनेनाधस्त्रिकेण हत्वा जाता चतुर्विंशतिस्तथा हरस्त्रयः सांशकः सैको जाताश्चत्वारस्तैराद्यमंशं पञ्चदशलक्षणमाहन्यते, जाता षष्टिश्चतुर्विंशतिच्छेदा। शेषं विनष्टम्, यथा {६० / २४}। अस्याधः स्वषडंशः, यथा {६० / २४ / १ / ६}। अत्र छेदनं चतुर्विंशतिश्छेदनेन–अधोऽङ्कषट्केन हत्वा जातं चतुश्चत्वारिंशदधि(क)शतं सांशकाधोहरेण षड्मध्ये क्षिप्तैकजातसप्तकेनाद्यमंशं षष्टिराहन्यते। जाता विंशत्यधि(क)चतुःशती चतुश्चत्वारिंशदधि(क)शतच्छेदा {४२० / १४४}। शेषं विनष्टम्। अयमङ्कः स्थाने स्थाप्यः॥

इदानीं भागानुबन्धिभागन्यासः {१ / ३ / १ / ६ / १ / ४}। अत्र रूपाभावात् छेदनिघ्नेत्यादिप्रक्रिया नहि। ततश्छेदनमुपरित्रिकं छेदनेन–षट्केन हत्वा जाता अष्टादशअं(सां)शकाधोहरेण षट्मध्यक्षिप्तए(सै)कांशतया सप्तकेनाद्यमंशमाहन्यते। जाता सप्ताष्टादशच्छेदाः। शेषं गुणकत्वाद् विनष्टम्, यथा {७ / १८}। अस्याधः स्वपादः, यथा {७ / १८ / १ / ४}। छेदमष्टादशच्छेदनेन–चतुर्भिर्हत्वा जाता द्वासप्ततिः। सांशकाधोहरेण चतुर्मध्यक्षिप्तैकांशतया पञ्चभिः सप्त हन्यन्ते। जाताः पञ्चत्रिंशत् द्वासप्ततिच्छेदाः, यथा {३५ / ७२}। पूर्वस्थापितभागानुबन्धरूपाङ्कस्य विंशत्यधि(क)चतुःशतस्य द्वादशभिरपवर्ते जाता पञ्चत्रिंशत्। चतुश्चत्वारिंशदधि(क)शतस्य द्वादशभिरपवर्ते जाता द्वादश, यथा {३५ / १२}। द्वितीयाङ्कस्तादृगेवास्याग्रतः स्थाप्यः, यथा {३५ / ७२}। अत्र द्वादशद्विसप्ततिच्छेदयोर्द्वादशभिरपवर्ते क्रमादेकः षट्कं जातम्। ततोऽंशच्छेदावित्यादिना विनिमये यथा {३५ / १२ / ६ | ३५ / ७२ / १}। षड्गुणाः पञ्चत्रिंशत् जातं दशाधि(क)द्विशतम्। षड्गुणा द्वादश जाता द्वासप्ततिः। पराङ्क एकगुणस्तथैव। ततो दशाधि(क)द्विशतमध्ये पञ्चत्रिंशत्क्षेपे जातं पञ्चचत्वारिंशदधि(क)द्विशतं द्वासप्ततिच्छेदम्। शेषं विनष्टम्, यथा {२४५ / ७२}। द्वासप्तत्या उपर्यङ्कस्य भागे लब्धं रूपत्रयं एकोनत्रिंशच्च द्वासप्ततिभागा, यथा {३ / २९ / ७२}। एवं भागानुबन्धजातिः समाप्ता॥

(अथ) भागापवाहजातौ करणसूत्रं वृत्तम्—

भागापवाहनविधौ हरनिघ्नरूपे
राशेर्लवानपनयेद् गुणयेद्धरेण।
छेदं त्वधस्तनलवोनहरेण हन्या-
दाद्यांशकं खलु वदन्ति सवर्णतज्ज्ञाः॥[१]

व्याख्या—यत्र रूपभागा यदिवा भागसङ्कलितरूपाद् भागा यद्वा भागाद् भागा अपवाह्यन्ते यत्र तत्र भागापवाहनविधौ हरनिघ्नेति ऊर्ध्वांशस्य यो हरश्चतुर्भागादिस्तद्गुणरूपे उपर्यंशलक्षणराशेरुपर्यंशान् हरगुणितान् लवान् भागान् पश्चादवस्थितशून्यानेकादीनपनयेत्। अथवा हरनिघ्नो यो रूपराशिस्तस्मात् हरनिघ्नरूपात् राशेरर्थस्तु पूर्ववत्। ततो हरेण उपरितनेन छेदं अधोऽंशच्छेदं अधोऽंशच्छेदेन वा ऊर्ध्वांशच्छेदं गुणयेत्। तथा अधस्तनलवेति अधोऽंशन्यूनहरेण आद्यांशकं हन्यात्। शेषं स्पष्टम्॥

अत्रोद्देशकश्लोक एकः—

पूर्वोक्ता(?ङ्का)नपि ब्रूहि, निजभागविवर्जितान्।
सवर्णयित्वेह चेन्मित्र!, वेत्सि भागापवाहनम्॥[२]

व्याख्या—पूर्वोक्तान् सचरणदशादीनित्यत्र विचरणदशादि ज्ञेयम्। यैर्भागैर्येऽङ्काः पूर्वप्रयुक्तास्तैरेव भागैस्त एवाङ्का अत्र वियोज्याः। तेषां भागानां च वियोज्यत्वोपलक्षणाय पश्चात् तेषां शून्यं देयम्। प्रथमोदाहरणन्यासः $\left\{\begin{array}{c|c|c} १० & १ & २ \\ ० \; १ & ० \; २ & ० \; २ \\ ४ & २ & ३ \end{array}\right\}$। अत्राद्यपदक्रियैव कार्या यथा हरेति प्रथमाङ्के। हरश्च तत्रि(चतुर्?)—घ्नोरूपराशिर्दशलक्षणो जाता चत्वारिंशत्। अतो भागानपनयेत्। एकभागापनयने जाता एकोनचत्वारिंशच्चतुश्छेदाः, यथा $\left\{\begin{array}{c} ३९ \\ ४ \end{array}\right\}$। द्वितीयाङ्के हरनिघ्नेति द्विगुण एको जातौ द्वौ। तस्मादेकापनयने जात एको द्विच्छेदः, यथा $\left\{\begin{array}{c} १ \\ २ \end{array}\right\}$। तृतीयेऽङ्के हरनिघ्नेति त्रिगुणौ द्वौ जाताः षट्, एकभागापनयने जाताः पञ्च त्रिच्छेदाः, यथा, $\left\{\begin{array}{c} ५ \\ ३ \end{array}\right\}$। अत एतेषां संयोजनार्थं अंशच्छेदावित्यादिना प्रथमाङ्के छेदचतुष्कस्य अर्धेनापवर्ते जातौ द्वौ। द्वितीयाङ्के द्विच्छेदस्यापवर्तने जात एकः। ततो विनिमये यथा $\left\{\begin{array}{c|c} ३९ & १ \\ ४ & २ \\ १ & २ \end{array}\right\}$। ततः प्रथमोऽङ्क एकगुणः स एव। द्वितीयाङ्के द्विगुण एको जातौ द्वौ। द्विगुणौ द्वौ जाताश्चत्वारः। समच्छेदत्वात् प्रथमोपरिमांशैकचत्वारिंशन्मध्ये द्विकक्षेपे जाता एकचत्वारिंशच्चतुश्छेदा। शेषं विनष्टम्, यथा $\left\{\begin{array}{c} ४१ \\ ४ \end{array}\right\}$। तृतीयाङ्केन समं यथा चतुस्त्रिच्छेदयोर्विनिमये $\left\{\begin{array}{c|c} ४१ & ५ \\ ४ & ३ \\ ३ & ४ \end{array}\right\}$।

---

१ वसन्ततिलका। २ सप्ताक्षरमयाद्यचरणात्मकमनुष्टुप्(?)।

ततस्त्रिगुणा एकचत्वारिंशत् जातं त्रयोविंशत्यधि(क)शतम्, त्रिगुणाश्चत्वारो जाता द्वादश, यथा $\left\{\begin{matrix}\text{१२३}\\ \text{१२}\\ \text{३}\end{matrix}\right\}$ । पराङ्के चतुर्गुणाः पञ्च जाता विंशतिः, चतुर्गुणास्त्रयो जाता द्वादश, यथा । $\left\{\begin{matrix}\text{२०}\\ \text{१२}\\ \text{४}\end{matrix}\right\}$ । ततस्त्रयोविंशत्यधि(क)शतांशमध्ये विंशतिक्षेपे जातं त्रयश्चत्वारिंशदधि(क)शतं द्वादशच्छेदम्, यथा $\left\{\begin{matrix}\text{१४३}\\ \text{१२}\end{matrix}\right\}$ । शेषं विनष्टम् । ततो द्वादशभिस्त्रयश्चत्वारिंशदधि(क)शतस्य भागे लब्धमेकादशरूपाण्येकादश च द्वादशभागाः, यथा $\left\{\begin{matrix}\text{११}\\ \text{११}\\ \text{१२}\end{matrix}\right\}$ ।

अथ द्वितीयवृत्तोदाहरणन्यासः $\left\{\begin{matrix} & \text{१}\\ \text{०} & \text{१}\\ & \text{४}\\ \text{०} & \text{१}\\ & \text{२}\\ \text{०} & \text{१}\\ & \text{३}\\ \text{०} & \text{१}\\ & \text{६}\end{matrix}\right\}$ । अथ भागाः $\left\{\begin{matrix} & \text{१}\\ & \text{३}\\ \text{०} & \text{१}\\ & \text{६}\\ \text{०} & \text{१}\\ & \text{४}\end{matrix}\right\}$ । अत्र पूर्णा प्रक्रिया ।

हरनिघ्नेति प्रथमं हरश्चतुष्कनिघ्नो रूपराशिरेको जाताश्चत्वारः, एकलवापनयने जाता अष्टौ[1], अधस्तनलवेन हरेण द्विकेन एकांशरहितत्वादेकेन आद्यांशं त्रिलक्षणं हन्यात् । तादृगेव स्थितं यथा त्रयोऽष्टच्छेदाः $\left\{\begin{matrix}\text{३}\\ \text{८}\end{matrix}\right\}$ । ततोऽस्याधस्त्र्यंशोऽधस्तनः, यथा $\left\{\begin{matrix} & \text{३}\\ & \text{८}\\ \text{०} & \text{१}\\ & \text{३}\end{matrix}\right\}$ । हरेण त्रिकेण छेदमुपर्यष्टौ हन्यात् । जाता चतुर्विंशतिः । अधस्तनलवोनहरेण त्रिकेण एकांशरहितत्वाद् द्विकेनाद्यांशमुपरित्रिलक्षणं हन्यात् । जाताः षट् चतुर्विंशतिच्छेदाः, यथा $\left\{\begin{matrix}\text{६}\\ \text{२४}\end{matrix}\right\}$ । अस्याधोऽधस्तनः षडंशः $\left\{\begin{matrix} & \text{६}\\ & \text{२४}\\ \text{०} & \text{१}\\ & \text{६}\end{matrix}\right\}$ । अधोहरेण–षट्केन छेदमुपरिचतुर्विंशतिं गुणयेत् । जातं चतुश्चत्वारिंशदधि(क)शतम् । अधस्तनलवोनहरेण–षट्केन एकांशरहितत्वात् पञ्चकेनाद्यांशं षट्कं हन्यात् । जाता त्रिंशत् चतुश्चत्वारिंशदधि(क)शतच्छेदा, यथा $\left\{\begin{matrix}\text{३०}\\ \text{१४४}\end{matrix}\right\}$ । गुणकाः सर्वत्र यान्तीति ज्ञेयम् । अनयोः षड्भागेनापवर्ते उपरि पञ्च अधश्चतुर्विंशतिः, यथा $\left\{\begin{matrix}\text{५}\\ \text{२४}\end{matrix}\right\}$ । अयं स्थाने स्थाप्यः ।

अथ भागप्रक्रिया । अत्र रूपाभावात् हरनिघ्नरूपप्रक्रिया नास्ति । शेषा तु यथा त्र्यंशः षडंशोनन्यासः $\left\{\begin{matrix} & \text{१}\\ & \text{३}\\ \text{०} & \text{१}\\ & \text{६}\end{matrix}\right\}$ । हरेणाधः षट्केन छेदमुपरि त्रिलक्षणं गुणयेत्, जाता अष्टादश । अधस्तनलवोनहरेण षट्केन एकांशरहितत्वात् पञ्चकेनाद्यांशमेकं हन्यात्, जाताः पञ्चाष्टादशच्छेदाः $\left\{\begin{matrix}\text{५}\\ \text{१८}\end{matrix}\right\}$ । शेषं याति । अस्याधो न्यूनचतुर्भागः, यथा $\left\{\begin{matrix} & \text{५}\\ & \text{१८}\\ \text{०} & \text{१}\\ & \text{४}\end{matrix}\right\}$ । अधोहरेण चतुर्भिश्छेदमुपर्यष्टादश गुणयेत्, जाता द्वासप्ततिः । अधस्तनलवोनहरेण चतुष्केण एकांशन्यूनत्वात् त्रिकेण आद्यांशं पञ्च हन्यात्, जाताः पञ्चदश द्वासप्ततिच्छेदाः, यथा $\left\{\begin{matrix}\text{१५}\\ \text{७२}\end{matrix}\right\}$ । अनयोस्त्रिभिरपवर्ते

---

१ अत्र पाठप्रपातः सम्भाव्यते ।

उपरि पञ्च अधश्चतुर्विंशतिः, यथा $\left\{\frac{५}{२४}\right\}$। ततो रूपभागनिष्पन्नाङ्कस्य पञ्चचतुर्विंशतिच्छेदस्य मध्ये समच्छेदत्वादमी पञ्च क्षिप्ता जाता दश चतुर्विंशतिच्छेदाः, यथा $\left\{\frac{१०}{२४}\right\}$। अनयोरर्धापवर्ते उपरि जाताः पञ्च, अधश्च द्वादश, भाज्याभावादिदम्, यथा $\left\{\frac{५}{१२}\right\}$। एवं भागापवाहजातिः समाप्ता ॥

वल्लीसवर्णनम्—

अथ वल्लीसवर्णनजातौ करणसूत्रं वृत्तमाह—

प्राक् छेदभागौ गुणयेद्धरेण
तलस्थितेनांशमधःस्थितं तु ।
ऋणं धनं पूर्वलवे विदध्यात्
सवर्णनार्थं द्रुतमत्र वल्ल्याः ॥[1]

व्याख्या—अङ्कद्वयापेक्षा प्रक्रिया । अङ्कश्चांशच्छेदरूपस्ततस्तलस्थितेन हरेण–अधश्छेदेन–प्राक् उपरिच्छेदभागौ–छेदांशौ गुणयेत् । ततोऽधःस्थितमंशं ऋणमिति यस्यांशस्य पश्चात् शून्यमपवाह्यत्वाल्लिखितं तमंशं ऋणसञ्ज्ञं पूर्वलवे विदध्यात् । अधोहरेण गुणितादुपरिमांशराशेरपनयेदित्यर्थः । तथा अधःस्थितमंशं धनं यस्यांशस्य पश्चान्न शून्यमस्ति भागानुबन्धजातित्वात् तमंशं धनसञ्ज्ञं पूर्वलवे अधोहरगुणितोपरिमांशराशौ निक्षिपेत् । अत्र ऋणशब्देन भागानुबन्धजातिर्दर्शिता, न तु तद्गतप्रक्रिया ॥

अत्रोद्देशकवृत्ते एकमुदाहरणमाह—

द्रम्मद्वयं पञ्च पणास्तथैका
काकिण्यहो मित्र! कपर्दिकोना ।
तदंह्रिणा चापि सवर्णयित्वा
व्यावर्ण्यतां द्राग् यदि बोबुधीषि ॥[2]

व्याख्या—द्रम्मद्वयम्, तथा पञ्च पणा यादृशैः षोडशपणैर्द्रम्मस्त्रिंशत्यां च पुराणः प्रोक्तस्तादृशाः पञ्च पणाः । काकिण्येका चतुष्काकिणीरूपपणस्य चतुर्भागः । सा कपर्दकोना, कपर्दः काकिण्या विंशतितमो भागस्तेनोना तथा तदंह्रिणोनाऽपि । तच्छब्देन "सर्वनाम्नाऽनुसन्धिर्वृत्तिच्छन्नस्य" इति न्यायात् तस्य कपर्दकस्य अंह्रिः–चतुर्भागस्तेनाप्यूना वर्तते । तत एतत् सवर्णयित्वा–संयोज्य ब्रूहि यदि बोबुधीषि–गणितमत्यर्थं बुध्यसे । ऊर्ध्वगत्या वल्लिरूपत्वादङ्कानां न्यासः {४ ० ५ ० ० ४ ० ४ ० ४ / ६ १ ० १} । अत्र प्रक्रिया अङ्कद्वयापेक्षेति तलस्थितेन हरेण

---

१-२ उपजातिः ।

छेदेन षोडशकेन प्राक्–छेदं एकं गुणयेत्, जाताः षोडश। प्राक्भागे द्वौ गुणयेत् जाता द्वात्रिंशत्, यथा {३२ १६ ५ १६}। अधःस्थितमंशपञ्चकं पश्चाच्छून्यरहितत्वाद् धनसञ्ज्ञं पूर्वलवे द्वात्रिंशल्लक्षणे विदध्यात्–क्षिपेत्। जाता सप्तत्रिंशत् षोडशछेदा, यथा {३७ १६}। गुणको याति सर्वत्र। अस्याध एका काकिणी अस्य चतुर्भागोपलक्षणा- चतुष्कयुक्ता, यथा {३७ १६ १ ४}। तलस्थितहरेण चतुर्भिः प्राक्छेदं षोडश गुणयेत्। जाता चतुःषष्टिः। तथा चतुर्भिर्भागं उपरिसप्तत्रिंशतं गुणयेत्, जातमष्टचत्वारिंशदधि(क)शतम्। तदस्य मध्ये पूर्वलवलक्षणे तलस्थमंशमेकं विदध्यात्–क्षिपेत्, जातमेकोनपञ्चाशदधि(क)शतं चतुःषष्टिच्छेदम्, यथा {१४९ ६४}। अस्याधो ऋणगताङ्कदर्शनाय ऊना कपर्दाङ्केन। कपर्दकश्च काकिणीविंशतिभागोपलक्षणाय विंशतिमुक्त ऊनः स शून्यः स्थाप्यः, यथा {१४९ ६४ ०१ २०}। तलस्थितेन हरेण विंशत्या प्राक्छेदं चतुःषष्टिं गुणयेत्, जाता द्वादशशती अशीतिश्च। तथा विंशत्या प्राग्भागमेकोनपञ्चाशदधि(क)शतं गुणयेत्, जाता एकोनत्रिंशत् शतानि अशीतिश्च। अत्र ऋणमेकं पूर्वलवे दध्यात्–अपनयेत्, यथा एकोनत्रिंशदादेरेकापनयने जातान्येकोनत्रिंशत् शतानि एकोनाशीतिः द्वादशशत्यशीतिच्छेदाश्च, यथा {२९७९ १२८०}। अस्याधः कपर्दकस्य न्यूनचतुर्भागा, यथा {२९७९ १२८० ०१ ४}। अत्र तलस्थितेन हरेण–प्राक्छेदं द्वादशशत्यशीतिं गुणयेत्, जाता विंशत्यधि(क)शत [ए]कयुक्ताः पञ्च सहस्राः। तथा चतुर्भिः प्राक्भागमेकोनत्रिंशदेकोनाशीतिं गुणयेत्, जाता एकादश सहस्रा नवशती षोडश। ऋणत्वादंशमधःस्थितमेकं पूर्वलवे एकादशादिरूपे अपनयेत्, जाताः पर्यन्ते पञ्चदश, यथा {११९७५ ५१२०}। अनयोरङ्कयोः पञ्चभिरपवर्ते उपरि जातानि त्रयोविंशतिशतानि त्र्यशीतिः, अधो दशशतानि चतुर्विंशतिश्च, यथा {२३८३ १०२४}। अत्राधोऽङ्केनोपर्यङ्कस्य भागे दत्ते लब्धं द्रम्मद्वयम्, शेष उपर्यङ्कः पञ्चत्रिंशदधि(क)त्रिशतरूपः। पणानयनाय षोडशभिर्गुण्या, जातं त्रिपञ्चाशत् षष्टिश्च, यथा {५३६० १०२४}। अस्य दशचतुर्विंशत्या भागे लब्धं पञ्च पणाः, उपर्यङ्कः शेषश्चत्वारिंशदधि(क)द्विशतरूपः। कपर्दिकोनकाकिण्यानयनाय चतुर्गुणा जाता नवशती षष्टिश्च। भागो नास्तीति काकिणीलब्धे शून्यम्, {०}। ततः कपर्दकानयनाय विंशत्या नवशती षष्टिश्च गुणिता जाता एकोनविंशतिसहस्रा द्विशती। अस्या दशचतुर्विंशत्या भागे लब्धमष्टादश कपर्दाः,

उपर्यङ्कः शेषः सप्तशती षष्टिश्च। कपर्दभागानयनाय चतुर्गुणा जाता त्रिंशत् द्वासप्ततिश्च, यथा ३७२। अस्य दशचतुर्विंशत्या भागे लब्धं त्रयश्चतुर्भागाः {३/४}। एवं वल्लीसवर्णनं यथा (समाप्तम्)॥

दृश्यजातिः—

अथ दृश्यजातौ करणसूत्रं वृत्तार्धमाह—

**रूपेण भागैक्यविवर्जितेन, दृश्याख्यजातौ विभजेच्च दृश्यम्।५५।**[1]

व्याख्या—दृश्याख्यजातौ दृश्यस्तम्भस्य सार्धहस्तादि लोकप्रत्यक्षं तदा च ख्याति—कथयति अदृश्यं यदयं स्तम्भः षट्हस्त आसीदिति लोकस्याप्रत्यक्षमपि ब्रवीति तत् आख्यं ततो कर्मधारये क्वचिद् विशेषणस्यापि परनिपातः। ततो दृश्याख्यजातौ दृश्यं सार्धहस्तादि वक्ष्यमाणं रूपेण भागानां तोयादिसन्निविष्टानामंशानामैक्यम्। "अंशच्छेदा"वित्यादिना संयोजनान्तेन विवर्जितेन "कृतसमहरराश्यो"रित्यादिव्यवकलितविधिना आयराशिलक्षणाद् रूपादंशविश्लेषं कृत्वा रूपशेषेण विभजेत्॥

अत्रोद्देशकवृत्तमाह—

**अर्धं तोये कर्दमे द्वादशांशः, षष्ठो भागो वालुकायां निमग्नः।**
**सार्धो हस्तो दृश्यते यस्य तस्य, स्तम्भस्याशु ब्रूहि मानं विचिन्त्य।५६।**[2]

स्पष्टः(म्)। न्यासः—{१/२ | १/१२ | १/६ | १/१/२}। "अंशच्छेदा"वित्यादिना छेदयोर्द्विद्वादशकयोरर्धापवर्तने विनिमये यथा {१/२/६ | १/१२/१}। प्राक् षड्गुण एको जाताः षट्। तथा षड्गुणौ द्वौ जाता द्वादश। पराङ्के एकगुणं तदेव। समच्छेदत्वात् षट्मध्ये एकक्षेपे जाताः सप्त द्वादशच्छेदाः, यथा {७/१२}। तत एकच्छेदषट्कस्य तथा द्वादशकस्य च षड्भागापवर्ते जातः क्रमादेको द्वौ च। ततो विनिमये यथा {७/१२/१ | १/६/२}। एकगुणः पूर्वाङ्कस्तथैव। पराङ्के द्विगुण एको जातो द्वौ, द्विगुणाः षट् जाता द्वादश। समच्छेदत्वात् सप्तमध्ये (द्वि)क्षेपे जाता नव द्वादशच्छेदाः {९/१२}। एतद्भागैक्यं रूपात् पातनीयम्। रूपं च समच्छेदमंशच्छेदावित्यादिना कार्यम्, यथा {१/१} रूपं मण्डयित्वा छेदविनिमये गुणने च यथा {९/१२/१ | १/१/१२}। एकगुणः पूर्वाङ्कस्तथैव। पराङ्के एको द्वादशगुणो जाता द्वादश द्वादशच्छेदाः, यथा। {१२/१२}। अस्माद् रूपराशेर्भागैक्यं नवलक्षणं विश्लेषणीयम्, शेषं रूपराशिस्त्रयो द्वादशच्छेदाः, यथा {३/१२}। अयं हरराशिर्जातः। ततः "कृत्वा परीवर्तनमंशहारयो"-

---

१ इन्द्रवज्रा। २ शालिनी।

रित्यादिना सार्धहस्तेन दृश्येन सममस्य त्रिद्वादशच्छेदस्य कुलिशापवर्तनं कृत्वा यथा { १२/३ १/१/२ } । द्वादशद्विकयोरर्धापवर्ते षट् एकश्च त्रयाणां च त्रिभागापवर्त एकः, यथा { ६/१ | १/१ } । एकगुणं सर्वं तथैव । एकभक्तस्याङ्को लब्धं तथैव, षट् हस्ताः सैकच्छेदाः { ६/१ } ।

लीलावत्यां च दृश्यजातौ करणसूत्रं वृत्तमिदं यथा—

"[1]उद्दिष्टकालापवदिष्टराशिः, क्षुण्णो हृतोऽंशै रहितो युतो वा ।
इष्टाहतं दृष्टमनेन भक्तं, राशिर्भवेत् प्रोक्तमितीष्टकर्म्म ॥"[2]

उदाहरणेनास्य व्याख्येत्युदाहरणमाह—

**पूर्वार्धं सत्रिभागं गिरिवरशिखरे कुञ्जराणां प्रन(ण)ष्टं**
**षड्भागश्चापि नद्यां पिबति च सलिलं सप्तमांशेन युक्तः ।**
**पद्मिन्यामष्टमांशं स्वनवमक इह क्रीडते पद्मखण्डे**
**नागेन्द्रो हस्तिनीभिस्तिसृभिरनुगते का भवेद् यूथसङ्ख्या? ।८७।**[3]

अर्थः प्रतीत एव । न्यासः { १/२/१/३ | १/६/१/७ १/८/१/९ } । दृश्य ४} भागानुबन्धभागजातिरियं रूपरहितत्वात् । "छेदनं छेदनेने"त्यादिना यथा छेदनमुपरिच्छेदनेनाधस्त्रिकेण हन्यात्, जाताः षट् । स्वांशकाधोहरेण सैकत्रिकेण जातचतुष्केण आद्यांशं हन्यात्, जाताश्चत्वारः षट्छेदाः, यथा { ४/६ } । गुणकत्वात् शेषं प्रयातीति सर्वत्र । एगं(? अधोऽ)ङ्के छेदनं षट् छेदनेन—अधःसप्तकेन हन्यात्, जाता द्विचत्वारिंशत् । स्वांशकाधोहरेण सैकसप्तकेनाद्यमंशमेकं हन्यात्, जाता अष्टौ द्विचत्वारिंशच्छेदाः, यथा { ८/४२ } । तृतीयाङ्के छेदनमष्टौ छेदनेन—अधोनवकेन हन्यात्, जाता द्वासप्ततिः । स्वांशकाधोहरेण सैकनवकेनाद्यांशमेकं हन्यात्, जाता दश द्वासप्ततिच्छेदाः, यथा { १०/७२ } । अतः परम् "अंशच्छेदा"वित्यादिना प्रथमद्वितीयाङ्कच्छेदयोः षड्भागापवर्ते द्विचत्वारिंशतः षड्भागः सप्त षण्णां चैकः, ततो विनिमये यथा { ४/६/७ | ८/४२/१ } । प्राच्याङ्के सप्तगुणाश्चत्वारो जाता अष्टाविंशतिः । सप्तगुणाः षट् जाता द्विचत्वारिंशत् । द्वितीयाङ्क एकगुणस्तथैव । समच्छेदत्वादष्टाविंशतिमध्ये अष्टक्षेपे जाता षट्त्रिंशत् द्विचत्वारिंशच्छेदा, यथा { ३६/४२ } । अथ तृतीयाङ्कच्छेदस्य द्वासप्ततिः, यथा { १०/७२ } । षड्भागापवर्ते द्वादश द्विचत्वारिंशच्छेदस्य षड्भागापवर्ते सप्त । ततो विनिमये यथा

---

१ श्रीयुतसुधाकरद्विवेदीसम्पादिते ग्रन्थे 'उद्देश' इति पाठः । तत्रास्य सूत्रस्य दशमोऽङ्कः । २ उपजातिः । ३ स्रग्धरा ।

{३६/४२/१२ | १०/७२/७} । आद्याङ्के द्वादशगुणाः षट्त्रिंशत् जाता द्वात्रिंशदधि(क)-चतुःशती। द्वादशगुणा द्विचत्वारिंशत् जाता चतुरधि(क)पञ्चशती। पराङ्के सप्तगुणा दश जाता सप्ततिः। तथा सप्तगुणा द्वासप्ततिर्जाता चतुरधि(क)पञ्चशती। समच्छेदत्वात् द्वात्रिंशदधि(क)चतुःशतमध्ये सप्ततिक्षेपे जाता द्विरुत्तरा पञ्चशती चतुरधि(क)पञ्चशतोत्तरच्छेदा, यथा {५०२/५०४} । अयं राशिरुद्दिष्टकालापः। पृच्छकोपदिष्टप्रश्न एष इव उद्दिष्टकालापवत् इष्टराशिः कल्पनया चत्वारः। एषोऽंशैः "अंशच्छेदा"वित्यादिना निष्पन्नैरुद्दिष्टकांशैः तद्विरुत्तरपञ्चशतलक्षणैः कृतविनिमये छेदैर्यथा {५०२/५०४/१ | ४/१/५०४} । क्षुण्णो–गुणितो जाता षोडशाधि(क)द्विसहस्री पञ्चशतचतुश्छेदा, यथा {२०१६/५०४} । एष इष्टराशिरायराशि[ः] समच्छेदो जातः। तत उद्दिष्टांशाङ्को द्विरुत्तरपञ्चशतरूप इष्टेन चतुर्भिर्गुणितो जाताऽष्टाधि-(क)द्विसहस्री पञ्चशतचतुश्छेदा {२००८/५०४}। अमीभिरंशैरिष्टराशिः षोडशाधि(क)-द्विसहस्रो रहितो जाता अष्टौ चतुरुत्तरपञ्चशतच्छेदाः, यथा {८/५०४} । अतःपरं इष्टाहतं इष्टेन चतुर्भिराहतं–गुणितं दृश्यं एको नागेन्द्रस्तिसृभिर्हस्तिनीभिः सह दृष्टत्वाच्चतुष्करूपं जाताः षोडश एकच्छेदाः, यथा {१६/१} । अनेन अंशरहितेष्टराशिना चतुरुत्तरपञ्चशतच्छेदाष्टांशकेन भक्तम्। अत्र च "कृत्वा परीवर्तनम्" इत्यादिना कुलिशापर्तनमष्टानां अष्टमे भागे एकः षोडशानां चाष्टमे भागे द्वौ, यथा {५०४/१ | २/१} । ततश्चतुरुत्तरपञ्चशतैर्द्विको गुणितो जातोऽष्टाधि(क)सहस्रः, छेदश्च एकगुणस्तथैव, यथा {१००८/१} । एषः अष्टाधि(क)सहस्रयूथराशिरासीदिति दृश्यचतुरङ्कात् परिज्ञातम्।

अथ घटना–अष्टाधि(क)सहस्रार्द्धं चतुरुत्तरपञ्चशती। अस्याश्च त्रिभाग अष्टषष्ट्यधि(क)शतम्, यथा {५०४/१६८} । एतद् गिरौ गतम्। इतश्च अष्टाधि(क)सहस्रात् षष्ठो भागोऽष्टषष्ट्यधि(क)शतम्। इदं अस्य च सप्तमो भागश्चतुर्विंशतिर्नद्यां जलं पिबति, यथा {१६८/२४} । तथा अष्टाधि(क)सहस्रात् अष्टमांशः षड्विंशत्यधि(क)शतम्। अन्यं च नवमो भागः चतुर्दश [षट्त्रिंशद्], यथा {१२६/१४} । क्रीडते हस्तिनीत्रयं हस्ती चैक इति चत्वारः। एषां योजने जातमष्टाधि(क)सहस्रम्, यथा {१००८/१} ॥

अत्रत्यरीत्याऽपि भागैक्यं द्विअ(द्व्य)धि(क)पञ्चशतांशं चतुरधि(क)पञ्चशतच्छेदं यावत् तथैव, यथा {५०२/५०४} । ततो रूपमेकमेकच्छेदं संस्थाप्य 'अंशच्छेदा"वित्यादिना छेदविनिमये, यथा {५०२/५०४/१ | १/१/५०४} । आद्याङ्क एकगुणस्तथैव। पराङ्कश्चतुरधि(क)पञ्चशतगुण एकः तथैव, यथा {५०४/५०४} । अस्मादायराशेर्भागै-

चयध्यधि(क)पञ्चशतपाते स्थितौ द्वौ चतुरधि(क)पञ्चशतच्छेदौ, यथा { २ / ५०४ } । अयं हरराशिः । ततो दृश्यं चत्वार एकच्छेदः, यथा { ४ / १ } । ततः "कृत्वा परीवर्तनमंशहारयो"रित्यादिना उपरि चतुरधि(क)पञ्चशती, अधश्च द्वौ । ततो द्वयोरपि छेदयोर्विनिमये यथा { ५०४ / २ / १ | ४ / १ / २ } । अंशयोरुपरि चतुर्णां चतुरधि(क)-पञ्चशत्याश्च मिथो गुणने जाता षोडशाधि(क)द्विसहस्री । छेदश्च द्विगुण एको जातौ द्वौ । ततो द्वाभ्यां षोडशाधि(क)द्विसहस्रस्य भागे यथा { २०१६ / २ } । लब्धं अष्टाधि(क)सहस्रं यूथगजाः, यथा १००८ । एवं दृश्यजातिर्भागानुबन्धादिजातियुक्ता परिज्ञेया । एवं दृश्यजातिः समाप्तः ॥

शेषजातिः—

अथ शेषजातौ करणसूत्रं वृत्तार्धमाह—

छिद्घातभक्तेन लवोनहार–घातेन भाज्यः प्रकटाख्यराशिः ।[1]

अत्र उपर्यंशाश्छेदाश्च तादृशा एव वारद्वयं स्थाप्या इत्यङ्कत्रयापेक्षा शेषजातिः समुदायादर्धं क्रीडति । ततः शेषार्धस्य त्र्यंशः पर्वतान्तः प्रविष्टः । ततो यच्छेषं तच्चतुर्भागः कुम्भकण्डूं विनोदयतीत्येवं शेषरूपा शेषजातिः । तस्यां द्वितीयवेलालिखितच्छिदां यो घातः—परस्परगुणनं स छिद्घातस्तेन भक्तेन विशेषणेन लवा—अंशा उपरिस्थास्तैरूनः अपवर्जितत्वात् यो हारराशिः—प्रथमलिखितच्छेदराशिस्तस्य यो घातः—परस्परगुणनं तेन लवोनहारघातेन भाज्यो—भजनीयः प्रकटाख्यराशिर्दृष्टषष्टिहस्तिलक्षणः ॥

अत्रोद्देशकवृत्ते उदाहरणमाह—

क्रीडां कर्तुं प्रवृत्तं क्वचिदपि च दलं मत्तदन्तीन्द्रयूथाः(?)
शेषत्र्यंशः प्रन(ण)ष्टो हरिणपतिभयादारटन् कन्दरेषु ।
शेषांह्रिर्गण्डकण्डूमपनयति सखे ! पञ्चमांशश्च शेषात्
पाथः पातुं प्रविष्टः प्रवद करटिनो हन्त दृष्टाश्च षष्टिः ॥[2]

स्पष्टम् । न्यासः { १/२/२ | १/३/३ | १/४/४ | १/५/५ } । अत्र क्रमेण एकैकलवन्यूनो हारराशिः । प्रथमच्छेदराशिरेकद्वित्रिचतुष्करूपो जातः । अंशाश्च भग्नाः, यथा { १/२ | २/३ | ३/४ | ४/५ } । अस्य लवोनहारराशेर्घातो—गुणनम्, यथा—एकगुणौ द्वौ, तथैव द्विगुणास्त्रयो जाताः षट्, षड्गुणाश्चत्वारो जाताश्चतुर्विंशतिः, यथा २४ । अयं लवोनहारघातः । अस्य भागं दातुं छिदामधस्तनानां घातः, यथा—द्विगुणास्त्रयो जाताः

१ इन्द्रवज्रा । २ स्रग्धरा ।

षट्, षड्गुणाश्चत्वारो जाता चतुर्विंशतिः, चतुर्विंशतिगुणाः पञ्च जातं विंशत्यधि(क)शतमिदम् । छिद्घातः कार्यः । ततश्छिद्घातेन–विंशत्यधि(क)शतेन, यथा {१२०} भक्ते लवोनहारघातराशौ चतुर्विंशतौ भाज्याभावाच्चतुर्विंशत्या द्वयोरपवर्ते चतुर्विंशतिस्थाने एकः, तथा विंशत्यधि(क)शतस्थाने पञ्च, यथा ५ । अनेन प्रकटराशेः षष्टिरेकच्छेदो भाज्य इति "कृत्वा परीवर्तनमंशहार(यो)"-रित्यादिना उपरि पञ्च अधश्चैकः, यथा {५/१} । ततो भागानां वधे, यथा {६०/१} । षष्टिः पञ्चगुणा जाता त्रिशती एकच्छेदा, यथा {३००/१} । एकगुणच्छेदोऽप्येक एव । तथा एकभक्ता त्रिशती तथैव स्थिता, यथा {३००} । एते यूथहस्तिनः ॥

एषां घटना । तथाहि–त्रिशतानामर्धं सार्धशतं क्रीडति, यथा १५० । शेषसार्धशतस्य त्र्यंशः पञ्चाशत्, यथा ५० गिरौ प्रविष्टः । शेषस्य एकशतस्य चतुर्भागः पञ्चविंशतिः कण्डूमपनोदयति । ततः शेषपञ्चसप्ततेः पञ्चमांशः पञ्चदश जलं पिबति षष्टिश्च दृष्टिदृष्टा, यथा {१५०/५०/२५/१५/६०} । एतेषां योजने जाता त्रिशती गजप्रमाणम्, यथा ३०० ।

अथ द्वितीयोदाहरणमाह—

**अर्धं शेषत्रिलवयुगलं शेषपादास्त्रयश्च**
**शेषेष्वंशा जलनिधिसमाः क्वापि चोड्डीय याताः ।**
**दृष्टं हंसत्रितयमपरं सङ्गतिं कल्पयन्तं**
**तस्मिन् यूथे कथय सुमते ! ते कियन्तो मरालाः ॥**[1]

न्यासेनैव व्याख्या, यथा {१/२/२ | २/३/३ | ३/४/४ | ४/५/५} । क्रमेण लवैरेकद्वित्रिचतुष्कैरूनो हारराशिः । प्रथमवेलालिखितद्वित्रिचतुःपञ्चच्छेदा राशिरेक एव सर्वत्र । अंशा भग्नास्ततो लवोनहारराशेरेकस्य घातो–मिथो गुणनं जात एक एव । अस्य भागमधोलिखितच्छिदां यातः, यथा–द्विगुणास्त्रयो जाताः षट् । एवं पूर्ववत् निर्वाहे विंशत्यधि(क)शतमयं छिद्घातस्तेन भक्तो लवोनहारराशिर्भाज्यः । प्रकटाख्यराशिर्यथा "कृत्वा परीवर्तन"मित्यादिना विंशत्यधि(क)शतमुपरि कार्यम्, अधश्चैकः प्रकटराशिरेकच्छेदास्त्रयः, यथा {१२०/१ | ३/१} । भागवधे विंशत्यधि(क)शतगुणास्त्रयो जाता षष्ट्यधि(क)त्रिशती । एकगुणच्छेदश्च एक एव । एकभक्ता च त्रिशती षष्टिश्च तथैव, यथा {३६०} ॥

---

१ मन्दाक्रान्ता ।

अस्य घटना—षष्ट्यधि(क)त्रिशती अर्धमशीतिशतं उड्डीनम् । ततः शेषस्याशीत्यधि(क)शतस्य त्रिभक्तस्य लवद्वयं विंशत्यधि(क)शतं उड्डीनम् । शेष(?स्य) षष्टेस्त्रयः पादाः पञ्चचत्वारिंशत् । ततः शेषेषु 'इषु'शब्देन मनोभवबाणवाच्यत्वात् पञ्चोच्यन्ते । ततः शेषेषु पञ्चदशसु पञ्चभक्तेषु जलनिधिसमा अंशा द्वादश । उड्डीनशेषं च हंसत्रयं पञ्चमांशलक्षणं सङ्गतिं करोति, यथा { १८० १२० ४५ १२ ३ } । एषां संयोजने जाता षष्ट्यधि(क)त्रिशती हंसयूथप्रमाणं { ३६० } ।

एवं शेषजातिः समाप्ता ॥

## विश्लेषजातिः—

अथ विश्लेषजातौ करणसूत्रं वृत्तमाह—

विश्लेषजातावधिकाद् विहीनं
विशोध्य शेषो विधिरुक्त एव ।
अपास्य भागैक्यमथैकतश्च
शेषेण दृश्यस्य हरेद् विभागम् ॥[1]

व्याख्या—विश्लेषजातौ अधिकाङ्कतो हीनाङ्कपातनलक्षणायां समच्छेदयोरंशयोर्मध्येऽधिकांशतो विहीनं हीनांशकं विशोध्य—विवरं विधाय शेषो विधिरंशयोश्छेदौ छेदने(ने)त्यादिविधिभिर्भागजात्युक्तोऽत्रापि ज्ञेयः । पश्चाद् भागैक्यमेकतः कृतसमहरराशे रूपलक्षणादपास्य तत एकरूपशेषेण दृश्यस्य हरेत् । एतद् दृश्यजातिवज्ज्ञेयम् ॥

अत्रोद्देशकवृत्तद्वये उदाहरणमेकमाह—

पञ्चांशश्चलचञ्चरीकनिचयाच्चूते गतोऽष्टांशकः
पद्मे तद्विवरं द्विनिघ्नमधिकं स्वार्धेन कुन्दे स्थितम् ।
कुन्दाग्र(?व)स्थितभृङ्गभागविवरस्यार्धं च षड्घ्नं युतं
त्र्यंशेन त्रिगुणं त्रिभागरहितं जातीलतामाश्रितम् ॥[2]

तिलकद्रुममञ्जरीनिविष्टं, भ्रमराणां दशकं च हन्त दृष्टम् ।
यदि वेत्सि तदा विचक्षणाशु, कथय मे (?येमं) मधुलिट्समूहसङ्ख्याम् ॥[3]

व्याख्या—चञ्चरीकनिचयात् पञ्चांशश्चूते अष्टांशश्च पद्मे, यथा { १/५ | १/८ } । "अंशच्छेदा"वित्यादिना छेदविनिमये यथा पञ्चाधोऽष्टौ अष्टाधः पञ्च, यथा { १/५/८ | १/८/५ } ।

---

१ उपजातिः । २ शार्दूलविक्रीडितम् । ३ औपच्छन्दसिकम् ।

अष्टगुण एको जाता अष्टौ, अष्टगुणाः पञ्च जाताश्चत्वारिंशत्, यथा {८/४०} । पराङ्के पञ्चगुण एको जाताः पञ्च, पञ्चगुणा अष्टौ जाताश्चत्वारिंशत्, यथा {५/४०/५} । ततस्तयोः समच्छेदयोर्विवरं अधिकाद् विशोध्ये यथाऽत्र अधिकादष्टलक्षणात् विहीनं हीनांशपञ्चकं विशोध्यम्, जातास्त्रयश्चत्वारिंशत् । एतत् तृतीयस्थाने स्थाप्यम् । पश्चाद् द्वितयं भञ्जनीयम्, यथा {१/५ | १/८ | ३/४०} । तद्विवरं त्रिकलक्षणं द्विनिघ्नं जाता षट्करूपचत्वारिंशच्छेदं अधिकं अर्धेन, यथा {६/४०/२/१} । अत्र भागानुबन्धजातौ "छेदनं छेदनेने"त्यादिना छेदनं–चत्वारिंशल्लक्षणं छेदनेन–द्वाभ्यां हन्यात्, जाता अशीतिः । तथा सांशो हरद्विलक्षणो जातास्त्रयः, तैः षट् हन्यात्, जाता अष्टादश । द्वयोरर्धापवर्ते उपरि नव, अधश्चत्वारिंशत् । अयं तृतीयस्थाने निश्चलः स्थाप्यः, यथा {१/५ | १/८ | ९/४०} । यत् यूथसङ्ख्याप्रमाणं तस्य चत्वारिंशता भक्तस्य यन्नवमे स्यात् तत् कुन्दे स्थितम् । कुन्दावस्थितभृङ्गभागयोरेकनवचत्वारिंशल्लक्षणयोर्विवरं कर्तुं "अंशच्छेदा"वित्यादिना छेदयोः पञ्चचत्वारिंशल्लक्षणयोः पञ्चमभागापवर्ते क्रमादेकाष्टलक्षणयोर्विनिमये यथा {१/५/८ | ९/४०/१} । प्राच्याङ्के अष्टगुण एको जाता अष्टौ, अष्टगुणाः पञ्च जाताश्चत्वारिंशत् । पराङ्क एकगुणस्तथैव, यथा {८/४०/८ | ९/४०/१} । अत्र विवरो नवकादष्टानां विश्लेषे य(प)श्चादेकचत्वारिंशश्छेदः स्थितः, यथा {१/४०} । अस्य विवरस्य एकलक्षणस्यार्धं एकोनार्धं सहत इति चत्वारिंशच्छेदानां द्विगुणतायामशीतिः, यथा {१/८०} । एतत् षड्घ्नम् यथा {६/८०} । स्वत्र्यंशेन यथा {६/८०/१/३} । भागानुबन्धजातौ "छेदनं छेदनेने"त्यादिना छेदनम्–अशीतिश्छेदनेन–अधस्त्रिकेण हन्यात्, जाता चत्वारिंशदधि(क)द्विशती । सांशकोऽधोहरेण सैकत्रिकेण चतुर्भिर्गुणिताः षड् जाता चतुर्विंशतिश्चत्वारिंशदधि(क)द्विशतच्छेदा, यथा {२४/२४०} । त्रिगुणं चतुर्विंशतिस्त्रिगुणा जाता द्वासप्ततिः, एतत् त्रिभागरहितम्, यथा {७२/२४०/०/१/३} । भागापवाहजात्युक्तेन "गुणयेद्धरेणे"त्यादिना हरेण–अधस्तनेन त्रिकेण छेदं–चत्वारिंशदधि(क)शतं गुणयेत्, जातं विंशत्यधि(क)सप्तशती । ततो लवोनहरेण एकांशेन हीनत्रिकेण जातद्विके आद्यांशं द्विसप्ततिः गुणयेत्, जातं चतुश्चत्वारिंशदधि(क)शतम्, यथा {१४४/७२०} । अनयोः चत्वारिंशदधि(क)शते भागेनापवर्ते उपर्येकः, अधश्च पञ्च, यथा {१/५} । यद् यूथेऽस्ति प्रमाणं तस्य पञ्चमांशे रूपं जातीलतामाश्रितम् । एतच्चतुर्थस्थाने स्थाप्यम्, यथा {१/५ | १/८ | ९/४० | १/५} । ततः पुनरप्यंशच्छेदावित्यादिना छेद-

विनिमये { १/५/८ | १/८/५ } । आदावष्टगुण एको जाता अष्टौ, अष्टगुणाः पञ्च जाताश्चत्वारिंशत् । पराङ्कपञ्चगुण एको जाताः पञ्च, तथा (अष्टौ) पञ्चगुणा जाताश्चत्वारिंशत् । समच्छेदत्वात् अष्टानां मध्ये पञ्चक्षेपे जातास्त्रयोदश चत्वारिंशच्छेदाः, यथा { १३/४० } । ततस्तृतीयाङ्कस्य नवकस्य त्रयोदशमध्ये प्रक्रियां विनाऽपि समच्छेदत्वात् क्षेपे जाता द्वाविंशतिश्चत्वारिंशच्छेदा । ततोऽस्य छेदस्य चतुर्थाङ्कच्छेदस्य च पञ्चभिरपवर्ते क्रमादष्टौ एकश्च जातः । ततः छेदविनिमये यथा { २२/४०/१ | १/५/८ } । आद्याङ्क एकगुणस्तथैव । पराङ्के अष्टगुण एको जाता अष्टौ, अष्टगुणाः पञ्च जाताश्चत्वारिंशत् । समच्छेदत्वात् द्वाविंशतिमध्ये अष्टांशक्षेपे जाता त्रिंशत् चत्वारिंशच्छेदा, यथा { ३०/४० } । एतद्भागैक्यं एतदपास्य एकतो यथा एक एकच्छेदः । ततो "ऽंशच्छेदा"वित्यादिना छेदविनिमये यथा { १०/४०/१ | १/१/४० } । प्राच्याङ्क एकगुणस्तथैव । पराङ्क एकचत्वारिंशद्गुणो जाता चत्वारिंशत्, यथा { ४०/४० } । तत एकोत्थचत्वारिंशतो मध्यात् त्रिंशत्पाते स्थिता दश चत्वारिंशच्छेदाः, यथा { १०/४० } । शेषेण भागैक्यविवर्जितेन दशकेन दृश्यं दश विभजेत्, तथाहि—दृश्यदशकच्छेदा ततो भागैक्यशेषदशच्छेदचत्वारिंशतः "कृत्वा परीवर्तन"मित्यादिनोपरि चत्वारिंशत्, अधश्च दश, यथा { ४०/१० | १/१ } । तत आद्याङ्कचत्वारिंशद्गुणा दश जाता चतुःशती । अस्याश्चत्वारिंशत एकगुणच्छेददशकेन भागे { ४००/१० } । लब्धं चत्वारिंशदलिकुलप्रमाणम् ।

अस्य वासना—चत्वारिंशत्पञ्चमे भागे अष्टौ चूतद्रुमे, चत्वारिंशदष्टमे भागे पञ्च पद्मे, चत्वारिंशद्भागीकृतयूथस्य चत्वारिंशतो नव भागा इति नव कुन्दे, चत्वारिंशत्पञ्चमे भागे अष्टौ जातीलतायां, दृश्याश्च दश, यथा { ८, ५, ९, ८, १० } एषां योगे जाता चत्वारिंशत् । एवं विश्लेषजातिः समाप्ता ॥

### शेषमूलजातिः—

अथ शेषमूलजतौ करणसूत्रं वृत्तमाह—

पदसमीपचतुर्गुणदृश्यके, स्वगुणमूलयुते कृतमूलके ।
पदयुते दलिते निजताडिते, विलवरूपहृतेऽथ पुनर्विधिः ॥[1]

(व्याख्या—) पदमूलशब्दावेकार्थौ । तस्य पदसमीपे चतुर्गुणं दृश्यं त्र्यादि । तत्र पदसमीपचतुर्गुणदृश्यके यत्र मूलस्य प्राग् द्विप्रभृतिसङ्ख्या नास्ति तत्र एक एव मूलं तच्च स्वगुणं एकगुणम् । ततः स्वगुणमूलेनैकेन युते जातनवके ततः कृतमूलके

---

१ द्रुतविलम्बितम् ।

चतुर्गुणस्वगुणमूलयुतस्य दृश्यस्य–नवकस्य कृतमूलं त्र्यादि तस्मिन् पदमेकस्तेन युते दलिते–अर्धीकृते जातद्व्यादिके 'निजताडिते' निजेन द्व्यादिना ताडिते लवाभ्याम्–अंशाभ्यां हीनं रूपं तेन हृते यल्लब्धं द्वादशादि तदेव पुनरपि दृश्यं स्थाप्यम् । तत्र लवाश्चान्तरालस्था उक्तार्थत्वात् प्रयान्ति । पश्चात् तत्र दृश्ये पुनर्विधिः पदसमीप इत्यादिको विधिर्लवाद् भागं विनाऽन्यः कार्यः ॥

अत्रोद्देशकवृत्ते उदाहरणमाह—

मूलं नीलदलोत्पलच्छदचयात् कर्णावतंसीकृतात्
कान्तक्रीडनताडनान्निपतितं तल्पे यदा सुभ्रुवः ।
त्र्यंशौ शेषभवौ च शेषकभवं मूलं च भूमौ गतं
दृष्टं पत्रयुगं तदा कति दलं तद् ब्रूहि नीलोत्पलम् ॥[1]

न्यासेनैवास्य व्याख्या–{मू. $\begin{smallmatrix}1\\1\end{smallmatrix}$ | शेल. $\begin{smallmatrix}2\\3\end{smallmatrix}$ | शेमू. $\begin{smallmatrix}1\\1\end{smallmatrix}$} दृश्य २ । पदस्य–शेषमूलस्य समीपं चतुर्गुणं दृश्यं द्वौ जाता अष्टौ । तत्र स्वगुणमूलं एकगुण एकस्तेन युतिः जाता नव । तत्र नवानां मूलं त्रयः । तत्र पदयुते पदमेकस्तेन युते जाताश्चत्वारः । दलिते–अर्धीकृते जातद्विके निजताडिते–द्विगुणिते जातचतुष्कके अत्र लवत्र्यंशद्वयस्य रूपस्य च यथा {$\begin{smallmatrix}2\\3\end{smallmatrix}$ | $\begin{smallmatrix}1\\1\end{smallmatrix}$} "अंशच्छेदा"वित्यादिच्छेदयोस्त्रिकैकयोर्विनिमये {$\begin{smallmatrix}2\\3\\1\end{smallmatrix}$ | $\begin{smallmatrix}1\\1\\3\end{smallmatrix}$} । प्राच्याङ्क एकगुणः स एव । पराङ्के त्रिगुणे एको जातास्त्रयः । एभ्यः प्राच्यलवद्वयपाते जात एकस्त्रिच्छेदः । एतद् विलवरूपं तेन हृते "कृत्वा परीवर्तन"मित्यादिनोपरि त्रयः, अधश्च एकः, यथा {$\begin{smallmatrix}3\\1\end{smallmatrix}$} । ततः सङ्गुणनाविधिर्यथा–त्रिकेण प्राक् दृश्योत्थश्चतुष्को गुण्यते, जाता द्वादश, एकगुणा एकच्छेदभक्ता अपि द्वादशैव । पुनर्विधिरिति एते द्वादश लग्नान्तराललवत्वात् । प्रथमपदसमीपदृश्यं तच्चतुर्गुणा जाता अष्टचत्वारिंशत् । तत्रत्यगुणमूलयुते एकगुण एकयुते जाता एकोनपञ्चाशत् । तत्र कृतमूलके एकोनपञ्चाशतो वर्गरूपस्य मूलं सप्त । तत्र पदयुते पदमेकस्तेन युते जाता अष्टौ । दलिते जातचतुष्कके निजताडिते–चतुष्ककेनैव गुणिते जाताः षोडश । भागविधिहेतवो लवा न सन्तीति तत एव लब्धं षोडशदलं नीलोत्पलम्, यथा १६ ॥

अस्य घटना–षोडशवर्गस्य मूलं चत्वारि तल्पे पतितम् । ततः शेषस्य–द्वादशकस्य त्र्यंशद्वयं–अष्टौ भूमौ पतितम् । ततः शेषस्य–चतुष्कस्य वर्गस्य मूलं द्वौ पतितम् । दृष्टं पत्रयुगम्, यथा {$\begin{smallmatrix}4\\8\\2\\2\end{smallmatrix}$} । एषां योगे जाताः षोडश ॥

---

१ शार्दूलविक्रीडितम् ।

अथ द्वितीयोदाहरणवृत्तमाह—

उड्डीय त्रिगुणं पदं शुककुलात् क्षेत्रेषु शालेर्गतं
तच्छेषोत्थदशांशकः फलभृतानाम्रद्रुमानाश्रितः ।
त्रिघ्नं शेषपदं च पाशपतितं व्याधस्य चापद्भृशे
विद्वन् ! कीरकुलप्रमाणमधुना तत् कथ्यतां वेत्सि चेत् ॥[1]

न्यासेनैवास्य व्याख्या—{मू ३/१ | शे १/१० | मू ३/१ | दृ ०} । अत्रान्यस्यानुक्तत्वात् शेषमूलं समीपदृश्यं शून्यं चतुर्गुणं शून्यमेव । तत्र स्वगुणमूलयुते त्रिगुणं मूलमेकस्त्रयः, तैर्युते शून्यस्थाने जातनवके क्षेपसदृशत्वात् शून्यस्य । तत्र नवानां मूलं त्रयः । तत्र पदयुते त्रिगुणं पदम्, तेन युते जाताः षट् । दलिते—अर्धिते जातत्रिके निजताडिते—त्रिकगुणिते जातनवके । विलवरूपहृते । तत्र लवो दशच्छेद एकः । रूपं चैकच्छेदम् । ततो "ऽंशच्छेदा" वित्यादिना छेदविनिमये {१/१०/१ | १/१/१०} । (एकः) एकगुणस्तथैव, दशगुण एको जाता दश । एभ्यो लवैकपाते जाता नवच्छेदाश्च दश । ततो दृश्योत्थनवकस्यैकच्छेदस्य भागार्थं "कृत्वा परीवर्तन" मित्यादिना रूपशेषं नव अधः, उपरि च दश, यथा {१०/९ | ९/१} । दृश्यद्वयोर्नवकयोर्नवभागापवर्तने एकः, यथा {१०/१ | १/१} । ततः सङ्गुणना—दशगुण एको जाता दश, एकगुणा एकच्छेदभक्ता अपि दशैव । ततः पुनर्विधिः प्रथमपदसमीपगतान्तस्य लवत्वात् । एते दशदृश्यं चतुर्गुणं जाताः चत्वारिंशत् । त्रिगुणपदमत्र त्रय एव । पदं स्वगुणं—त्रिगुणं जाता नव । तेन युते जाता एकोनपञ्चाशत् । तत्र मूलं सप्त । पदयुते पदत्रिकमेकस्तेन युते जातदशके दलिते जातपञ्चके निजताडिते—पञ्चकेनैव गुणिते जाता पञ्चविंशतिः । कीरकुलस्य प्रमाणमेवं स्यात् ।

अस्य घटना—पञ्चविंशतेर्मूलं पञ्च । त्रिगुणं पञ्चदश शालिक्षेत्रे गतम् । शेषदशकस्य दशांश एकगुणश्चूतद्रुमं गतः । अत्र शेषपदं त्रिकम्, तत् त्रिगुणं नवकं व्याधस्यापदि पतितम्, यथा {१५/१/९} । एषां योगे पञ्चविंशतिः, यथा २५ । इयं शेषमूलसमीपस्थदृश्योत्थितत्वात् शेषमूलजातिः समाप्ता ॥

### मूलाग्रभागजातिः—

मूलाग्रभागजातौ करणसूत्रं वृत्तम्—

भागोनरूपविहृते खलु दृश्यमूले
दृश्यात् पदार्धकरिणीसहितात् पदे च ।

---

१ शार्दूलविक्रीडितम् ।

मूलद्विभागसहिते गमिते कृतित्वं
राशिर्भवेदभिमतो हृदि यस्त्वदीये ॥[1]

व्याख्या—दृश्यमूल इति दृश्यं च मूलं च दृश्यमूलं तत्र दृश्यमूले। भागोनरूपविहृते–संवर्गितभागन्यूनरूपेण प्रस्तावे विभक्ते सति दृश्यादित्यादि पदं–मूलं तस्यार्धम्। यदा च पदं नार्धं सहते [पदं] तदाऽधश्छेदं द्विगुणं कृत्वा तस्य पदस्यार्धितस्य करणी–वर्गस्तेन सहिताद् दृश्यादङ्कात् "विषमसमे"त्यादिना समानीते द्विघ्नार्धिते पदे। मूलद्विभागेत्यादि भागोनरूपविहृतिवेलायां यन्मूलमकृतकरणीकं तस्य द्विभक्तस्य यल्लब्धं तेन सहिते। गमिते कृतित्वं तस्य मूलद्विभागसहितदृश्योत्थपदाङ्कस्य वर्गे कृते सति अभिमतो राशिर्भवेदित्यादि स्पष्टम्॥

अत्रोद्देशकवृत्ते उदाहरणमाह—

त्र्यंशः सारङ्गयूथात् त्रिलवकसहितो व्याघ्रभीत्या प्रणष्टो
गीते लुब्धं स्वमूलं विगलितकवलं मीलिताक्षि स्थितं च।
यूथाद् भ्रष्टे कुरङ्ग्यौ तरलितनयने हन्त दृष्टे भ्रमन्त्यौ
कान्तारे ब्रूहि तूर्णं यदि गणितविधिं वेत्सि यूथप्रमाणम्॥[2]

न्यासेनैव व्याख्या—{रू १/१ | भा १/३ १/२ | दृ २}। अत्र भागानुबन्धजातौ "छेदनं छेदनेने"त्यादिना छेदनं–त्रिकं छेदनेन–त्रिकेण हन्यात्, जाता नव। सांशकाधोहरेण–सैकत्रिकेण चतुर्भिराद्यांशमेकं हन्यात्, जाताश्चत्वारो नवच्छेदाः, यथा {४/९}। रूपेणैकच्छेदेन सम"मंशच्छेदा"वित्यादिना विनिमये {४/९ १ | १/१ ९} आद्याङ्क एकगुणः स एव। पराङ्क एको नवगुणो जाता नव। एभ्यः प्राच्यभागचतुष्कपाते जाताः पञ्च नवच्छेदाः {५/९}। एतद् भागोनरूपम्। अनेन विहृते दृश्यमूले दृश्यं द्विकमेकच्छेदं विहर्तुं भागोनरूपस्य पञ्चकादेः "कृत्वा परीवर्तन"मित्यादिना यथा {९/५ | २/१}। सङ्गुणना–नव द्विगुणा अष्टादश, एकगुणाः पञ्च पञ्चैव, जाता दृश्यस्थाने अष्टादश पञ्चच्छेदाः, यथा {१८/५}। तथा मूलं एको नवगुणो जातमूलस्थाने नव पञ्चच्छेदाः, यथा {९/५}। एतेन भागोनरूपविहृते दृश्यमूले ज्ञेयम्। अत्र पदं नव, सोऽर्धं न सहते, ततस्तदधः पञ्चकस्य द्विगुणतायां जाता दश। एतेनार्धमुपर्यङ्को भवति। एवमर्धासहे उपर्यङ्के अधःस्थस्य द्विगुणतायामुपर्यङ्कोऽर्धितो भवति (इति) सर्वत्र ज्ञेयम्। पदार्धस्य–

---

१ वसन्ततिलका। २ स्रग्धरा।

नवकस्य करणी-वर्गो जाता एकाशीतिः, दशवर्गे च शतम्, यथा {८१/१००}। अनेन सहितं दृश्यं कर्तुं "अंशच्छेदा"वित्यादिना दृश्याष्टादशाधश्छेदस्य पञ्चकस्य पञ्चभिरपवर्ते एकम्, शतस्य पञ्चभिरपवर्ते विंशतिः। ततो विनिमये यथा {८१/१००/१ | १८/५/२०}। पूर्वाङ्क एकगुणः स एव। पराङ्के विंशतिगुणा अष्टादश जाता षष्ठ्यधि(क)त्रिशती। विंशतिगुणाः पञ्च जातं शतम्। समच्छेदत्वात् षष्ठ्यधि(क)-त्रिशतीमध्ये एकाशीतिक्षेपे जाता एकचत्वारिंशदधि(क)चतुःशती शतच्छेदा, यथा {४४१/१००}। द्वयोरप्यङ्कयोः "विषमसमे"त्यादिना लब्धौ द्विचत्वारिंशतो द्विगुणस्यार्धं उपर्येकविंशतिः, अधश्च दश, यथा {२१/१०}। अत्र मूलद्विभागः प्रयुक्तदशच्छेदनवकलक्षणः, तेन सहिता एकविंशतिर्जाता त्रिंशद् दशच्छेदा। अस्याः कृतिरुपरि नवशती, अधश्च शतम्, यथा {९००/१००}। अधोऽङ्केनोपर्यङ्कस्य भागे लब्धं नव मृगप्रमाणम्।

अस्य घटना—नवकस्य त्र्यंशस्त्रयः। स्वलवस्त्रयाणां त्रिभागे एकस्तत्सहिताश्चत्वारो नष्टाः। स्वमूलं-नवकमूलं त्रयो गीते लब्धम्। दृष्टं च द्वयम्, यथा {३/१/३/२}। एषां योगे नव॥

द्वितीयोदाहरणमाह—

कपिकुलनवमांशाः पञ्च मूलेन युक्ताः
पनसविटपिशाखान्दोलनासक्तचित्ताः।
फलमभिलषमाणा वानरा द्वन्द्वयुद्धा
दश च गणक! दृष्टा यूथमानं वदाशु॥[1]

(न्यासः) {रू १/१ | यू ५/९ | मू १/१ | दृ १०}। अत्र एकच्छेदरूपस्य भागैक्यार्थं "मंशच्छेदा"-वित्यादिना छेदविनिमये यथा {१/१/९ | ५/९/१}। प्राच्याङ्के नवगुण एको जाता नव नवच्छेदाः, पराङ्क एकगुणः स एव। ततो रूपाङ्कान्नवतो भागपञ्चकपाते जाता नवच्छेदाश्चत्वारः, यथा {४/९}। एतद् भागोनरूपम्। अनेन विहृते दृश्यमूले। तथाहि-दृश्यमूलक्रमाद् दशैकावेकच्छेदौ विभक्तम्। १०। रूपशेषचतुर्नवकस्य भागदायिनः "कृत्वा परीवर्तनमंशहारयो"रित्यादिना उपरि नव, अधश्चत्वारः, यथा {९/४}। ततो दृश्यदशकस्य नवगुणे जाता नवतिश्चतुश्छेदा, यथा {९०/४}। तथा मूलस्य-एकस्य नवगुणे जाता नव चतुश्छेदाः {९/४}। एतेन भागोनरूपविहृते दृश्यमूले जाते। अत्रापि पदं नवार्धं न सहते, तदधश्चतुर्णां द्विगुणतायां

---

१ मालिनी।

जाता अष्टौ। एतेन जातं पदार्धम्। ततः करणी–वर्ग उपर्येकाशीतिः, अधश्च चतुःषष्टिः। अयं भिन्नवर्गः, तेन सहिताद् दृश्यात् चतुश्छेद(दा) नवतिः। तथाहि–“अंशच्छेदा”वित्यादिना छेदविनिमये द्वयोश्चतुर्भिरपवर्ते जाते एकके षोडशके, यथा {८१/६४/१ | ९०/४/१६}। पूर्वाङ्क एकगुणः स एव, पराङ्क(ङ्के) षोडशगुण(णा) नवतिर्जाता चत्वारिंशदधि(क)चतुर्दशशतानि, षोडशगुणाश्चत्वारो जाता चतुःषष्टिः। समच्छेदत्वात् चत्वारिंशदधि(कचतुर्दश)शतमध्ये एकाशीतिक्षेपे जाता एकविंशत्यधि(क)पञ्चदशशती चतुःषष्टिच्छेदा, यथा {१५२१/६४}। अनयो“र्विषमसमे”त्यादिना द्विघ्नार्धेन चोपरि लब्धैकोनचत्वारिंशत्, अधश्चाष्टौ। एतद् भिन्नवर्गमूलम्, यथा {३९/८}। अत्र मूलद्विभागो रूपशेषनवाष्टच्छेदाः। एतत्सहिता सदृशच्छेदत्वादेकोनचत्वारिंशमध्ये नवक्षेपे जाता अष्टचत्वारिंशत्। ततोऽष्टचत्वारिंशदष्टकयोरष्टभिरपवर्ते उपरि षट्, अधश्चैकः, यथा {६/१}। अनयोः कृतिरुपरि षट्त्रिंशत्, अधश्चैकः, यथा {३६/१}। एतत् कपियूथप्रमाणम्।

अस्य घटना–नवभक्तः षट्त्रिंशतः पञ्चभागाश्चतुष्कपञ्चकेन विंशतिः, षट्त्रिंशतश्च मूलं षड्, विंशतिरान्दोलने दृष्टाश्च दश, यथा {२०/६/१०}। एषां योगे षट्त्रिंशत् ॥

अथ तृतीयोदाहरणमाह—

**अष्टांशः क्रोडयूथात् सुगणक! कुरुते पल्वले पङ्ककेलिं**
**मूलं सार्धं नु मुस्ताः[1] खनति खलु सखे! पोत्रिणी सप्तपोता।**
**दृष्टा भ्रष्टा स्वयूथान्निजकुलमभितोऽन्वेषमाणा प्रचक्ष्व**
**क्षिप्रं जानासि पाटीं यदि ननु कतिभिः सूकरैर्यूथमेतत् ॥[2]**

न्यासेनैवास्य व्याख्या—{यू १/८ | मू १/१/२ | दृ ९/१}। अत्र मूलाङ्के “छेदनिघ्ने”ष्वित्यादिना छेदद्विगुण एको जातौ द्वौ, रूप एको मध्ये जातास्त्रयो द्विच्छेदाः। “भागोने”त्यादि कर्तुं रूपस्य एकच्छेदस्य भागच्छेदाष्टकस्य च विनिमये यथा, {१/१/८ | १/८/१}। अष्टगुण एको जाता अष्टौ, पराङ्क एकगुणः स एव। ततो रूपोत्थाष्टमध्याद् भागैकपाते जाताः सप्ताष्टच्छेदाः, यथा {७/८}। अनेन दृश्यमूले विभक्तुं हरराशित्वात् “कृत्वा परीवर्तन”मित्यादिना उपर्यष्टौ, अधः सप्त, यथा {८/७ | ८/१}। ततः सङ्गुणना–अष्टगुणा अष्टौ जाता चतुःषष्टिरेकगुणसप्तच्छेदा, यथा {६४/७}। मूलत्रिद्विरूपस्य मध्ये सङ्गुणना–अष्टांशगुणास्त्रयो जाता चतुर्विंशतिः,

---

१ तृणविशेषान्। २ स्रग्धरा।

तथा सप्तच्छेदगुणौ द्वौ जाताः चतुर्दश । एतेन भागोनरूपरहिते दृश्यमूले इति सिद्धम्, यथा {मू $\frac{२४}{१४}$ | दृ $\frac{६४}{७}$} । रूपशेषं गतं दृश्यादित्यादि । अत्र पदं चतुर्विंशतिस्तस्यार्धं द्वादश, तस्य करणी चतुश्चत्वारिंशदधि(क)शतम् । अधश्चतुर्दशानां करणी षण्णवत्यधि(क)शतम् । एकं विना द्विप्रभृतीनां छेदानां 'भिन्न' इति सञ्ज्ञा । तत उपर्यधोऽङ्कयोर्वर्गो भवति, यथाऽत्र जातः {$\frac{१४४}{१९६}$} । अस्य योजनार्थं "अंशच्छेदा"वित्यादिना दृश्यचतुःषष्टिच्छेदस्य सप्तकस्य सप्तभिरपवर्ते जात एकः । षण्णवत्यधि(क)शतस्य सप्तभिरपवर्ते अष्टाविंशतिः । ततो विनिमये, यथा $\left\{\begin{matrix}१४४\\१९६\\१\end{matrix}\middle|\begin{matrix}६४\\७\\२८\end{matrix}\right\}$ । पूर्वाङ्क एकगुणः स एव । पराङ्के अष्टाविंशतिगुणा चतुःषष्टिर्जाता सप्तदशशती द्विनवतिश्च । अष्टाविंशतिगुणाः सप्त जातं षण्णवत्यधि(क)शतम्, यथा {$\frac{१७९२}{१९६}$} । समच्छेदत्वात् सप्तदशशत्यादिमध्ये चतुश्चत्वारिंशदधि(क)शतक्षेपे जाता एकोनविंशतिशती षट्त्रिंशच्च षण्णवत्यधि(क)शतच्छेदा, यथा {$\frac{१९३६}{१९६}$} । अनयो"र्विषमसमे"त्यादिना द्विघ्नार्धिते उपरि जाता चतुश्चत्वारिंशत्, अधश्चतुर्दश, यथा {$\frac{१४४}{१४}$} । अग्रमूलद्विभागोऽर्धं द्वादश, तेन सहिते जाता षट्पञ्चाशत् चतुर्दशच्छेदा, यथा {$\frac{५६}{१४}$} । अनयोश्चतुर्दशभिरपवर्ते उपरि चत्वारः, अधश्चैकः । ततोऽनयोः कृतिरुपरि षोडश, अधश्चैकः, यथा {$\frac{१६}{१}$} । एतत् सूकरयूथप्रमाणम् ।

अस्य घटना—षोडशकस्याष्टमे भागे द्वौ । षोडशकमूलं चत्वारः सार्धं षट् । दृष्टा अष्टौ, यथा $\left\{\begin{matrix}२\\४\\२\\८\end{matrix}\right\}$ । एषां योगे षोडश । एवं मूलाग्रे कृतभागनिष्पन्नत्वात् मूलाग्रभागजातिः समाप्ता ॥

अथ उभयाग्रदृश्यजातौ करणसूत्रं वृत्तमाह—

निरंशरूपाहतिभक्तदृश्य-
मूले पदघ्नांशकवर्गयुक्तात् ।
दृश्यैकतो मूलमथो पदार्ध-
युक्तं स्वनिघ्नं भवतीष्टराशिः ॥[1]

व्याख्या—इयमुभयाग्रम्—आद्याग्रमन्ताग्रम्, तत्र दृश्यं आदावन्ते च दृश्यं तद्रूपा जातिस्तत्र । निरंशरूपेति यावन्तो अंशा भवन्ति तावतो वारास्तावद्भिरंशैर्हीनानि रूपाणि तेषां आहतिः प्रभागजातिवदंशच्छेदयोरंशैरंशगुणनं छेदैश्छेदगुणनं तया भक्तं—भागहाररीत्या विभक्तं पर्यन्तदृश्यं मूलं च तत्र निरंश-

१ उपजातिः ।

रूपाहतिभक्तदृश्यमूले। दृश्यैक्यत इति दृश्ययोराद्यन्तयोरैक्यं–संयोगः समच्छेद-नाद् यः तस्मात्। दृश्यैक्यतः किंरूपात्? पदघ्न्यंशकेति पदस्य घ्न्यंशकमर्धं तस्य वर्गस्तद्युक्तात्। अयमर्थः—पदार्धवर्गयुक्तं पर्यन्तदृश्यं प्रथमं कृत्वा पश्चान्मूल-दृश्येनैक्यं विधेयम्। ततो "विषमसमे"त्यादिना मूलं पदार्धयुक्तं स्पष्टं स्वनिघ्नं पदार्धयुक्तमूलस्य योऽङ्कः स तेन गुणितो भवतीष्टराशिः॥

अत्रोद्देशकवृत्ते उदाहरणमाह—

स्तम्बे स्तम्बेरमेण स्थितमथ सरसि क्रीडया शेषषष्ठं
तस्थौ शेषेषुभागश्चरति गिरितटे शल्लकीपल्लवांश्च।
पादः शेषाच्च सिंहध्वनिभयचकितः सर्वमूलाभ्युपेतो
दृष्टोऽन्यः षट्करेणूरनुसरति करी ब्रूहि मानं कतीभाः?॥[1]

व्याख्या—स्तम्बे–आलानस्तम्भे स्तम्बेरमेण एकवचनान्तत्वादेकेन स्थितम्। शेषस्य इषुभागः–पञ्चमो भागः। शेषं स्पष्टम्। न्यासः–{ दृ $\frac{१}{१}$ | शे $\frac{१}{६}$ | $\frac{१}{५}$ | $\frac{१}{४}$ | मू $\frac{१}{१}$ | दृ $\frac{७}{१}$ }। "निरंशरूपे"त्यादि रूपमेकच्छेदगतः। "अंशच्छेदा"वित्यादिना छेदविनिमये गुणने च रूपस्थाने क्रमेण षट् षट्छेदाः पञ्च पञ्चच्छेदाश्चत्वारश्चतुश्छेदाः स्युः, यथा { $\frac{६}{६}$ | $\frac{५}{५}$ | $\frac{४}{४}$ }। ततः प्राग्लिखितांशस्य एकैकस्य पाते क्रमेण रूपस्थाने पञ्च षट्छेदाश्चत्वारः पञ्चच्छेदास्त्रयश्चतुश्छेदाः, यथा { $\frac{५}{६}$ | $\frac{४}{५}$ | $\frac{३}{४}$ }। एतस्य निरंशरूपस्य उपर्यङ्कस्याधश्छेदाङ्कस्य चाहतिः–मिथो गुणनम्, यथा पञ्चगुणाश्चत्वारो विंशतिः, विंशतिगुणाय (? स्त्रयः) [ उपरि ] षष्टिस्तथा षड्गुणाः पञ्च त्रिंशत्, त्रिंशद्गुणा-श्चत्वारो विंशत्यधि(क)शतम्, यथा { $\frac{६०}{१२०}$ }। अनयोः षष्ट्याऽपवर्ते उपर्येकः, अधो द्वौ, यथा { $\frac{१}{२}$ }। अनया निरंशरूपाहत्या भक्ते। तथाहि हरराशित्वात् "कृत्वा परीवर्तन"मित्यादिनोपरि द्वौ, अध एकः, यथा { $\frac{२}{१}$ }। ततो दृश्यस्य सप्तकस्य सद्गुणना–द्विगुणा सप्त जाताश्चतुर्दश। एकगुण एकच्छेदः स एव। तथा मूलमेकः। सद्गुणना–द्विगुण एको जातौ द्वौ। एकगुण एकच्छेदः स एव। तथा एकभक्तं दृश्यं मूलं च तदेव, यथा { $\frac{१४}{१}$ | $\frac{२}{१}$ | मू }। ततः पदस्य द्वयोर्घ्न्यंशक-मर्धमेकस्तस्य वर्गोऽप्येकस्तद्युक्तं दृश्यं चतुर्दश जाताः पञ्चदश एकच्छेदाः, यथा { $\frac{१५}{१}$ }। एतद्युक्तात् दृश्यैक्यत इति दृश्यमाद्यमेक एकच्छेदः। ततः सदृशच्छेदत्वात् पर्यन्तदृश्योत्थपञ्चदशमध्ये आद्यदृश्यैकक्षेपे जाताः षोडश, यथा { $\frac{१६}{१}$ }। अस्माद् दृश्यैक्यतो मूलं चत्वारः, पदं प्रागुक्तं द्वौ, तदर्धमेकस्तद्युक्ता-

---

१ स्रग्धरा।

श्चत्वारो जाताः पञ्च, स्वनिघ्नं पञ्चगुणाः पञ्च जाता पञ्चविंशतिः, यथा { २५ }। लब्धं करियूथप्रमाणम् ॥

अस्य घटना—पञ्चविंशतिमध्ये स्तम्बे एकः। शेषस्य चतुर्विंशतेः षडंशश्चत्वारः सरसि। शेषस्य विंशतेः पञ्चमांशश्चत्वारः पर्वते। शेषस्य षोडशक(स्य) पादश्चत्वारः सिंहभीतस्तथा पूर्वस्य प्रथमाङ्कस्य पञ्चविंशतेर्मूलं पञ्च तैरभ्युपेतो—युक्तः दृष्टाश्च सप्त, यथा { १ / ४ / ४ / ४ / ५ / ७ }। एषां योगे पञ्चविंशतिः ॥

अथ द्वितीयोदाहरणमाह—

मधुकरयुगं दृष्टं पद्मे परागपिशङ्गितं
करिवरकटे शेषादर्धं जगाम ससप्तकम्।
पदमथ गतं तद्यूथस्य क्वणन्नवमल्लिकां
भ्रमरमिथुनं दृष्टं भ्रातर्वदालिकदम्बकम् ॥[1]

न्यासेनैवास्य व्याख्या—{ २/१ | १/२/१/७ | मू १/१ | दृ २/१ }। अत्र भागानुबन्धत्वात् "छेदनं छेदनेने"त्यादिना ऊर्ध्वं द्वे छेदे अधः सप्तच्छेदेन हन्यात् जाताश्चतुर्दश। सांशकाधोहरेण—सैकसप्तकेन आद्यांशमेकं हन्यात्। जाता अष्टौ चतुर्दशच्छेदाः, यथा { ८/१४ }। ततो रूपस्यैकच्छेदस्य "अंशच्छेदा"वित्यादिना छेदविनिमये { ८/१४/१ | १/१/१४ }। एकगुणं तदेव। चतुर्दशगुणावेककौ जातं चतुर्दशद्वितयं रूपस्थाने, यथा { १४/१४ }। एतन्मध्यादष्टांशपाते जातं षट् चतुर्दशच्छेदरूपम्, यथा { ६/१४ }। अनयोरर्धापवर्ते उपरि त्रयः, अधश्च सप्त, यथा { ३/७ }। एतन्निरंशरूपम्। आहतिस्तु अन्यांशाभावान्नात्र। अस्य हरत्वात् "कृत्वा परीवर्तन"मित्यादिना उपरि सप्त, अधस्त्रयः, यथा { ७/३ }। ततो दृश्यस्य—द्विकस्य सङ्गुणना। जाताश्चतुर्दश, एकगुणास्त्रयस्त एव, यथा { १४/३ }। तथा मूलमेकस्य सप्तगुणं जाताः सप्त, एकगुणास्त्रयस्त एव, यथा { ७/३ | मू }। एतेन निरंशरूपाहतिर्भ(भ)क्तदृश्यमूले इति जातम्। ततः पदस्य—सप्तकस्य त्र्यंशकता अर्धं न घटते, तदर्धं छेदस्याधस्त्रिको द्विगुणो जाताः षट्छेदाः सप्त। ततो द्वयोरङ्कयोर्वर्गे उपरि एकोनपञ्चाशत्, अधश्च षट्त्रिंशत्, यथा { ४९/३६ }। ततः षट्त्रिंशतस्त्रिभिरपवर्ते द्वादश। दृश्याधश्छेदस्त्रिकस्य त्रिभिरपवर्ते एकः। ततो "ऽशच्छेदा"वित्यादिना छेदविनिमये, यथा { ४९/३६/१ | दृ १४/३/१२ }। एकगुणं तदेव। द्वादश-

१ हरिणी।

गुणाश्चतुर्दश जातमष्टषष्ठ्यधि(क)शतम् । द्वादशगुणास्त्रयो जाताः षट्त्रिंशत्, {१६८/३६} । समच्छेदत्वादष्टषष्ठ्यधि(क)शतमध्ये एकोनपञ्चाशत्क्षेपे जातं सप्तदशाधि(क)द्विशतं षट्त्रिंशच्छेदम्, यथा {२१७/३६} । एतेन पदत्र्यंशकवर्गयुक्तादिति सिद्धम् । एतद् दृश्यं मूलदृश्यद्विकेनैकच्छेदेनैक्यं कर्तुं "अंशच्छेदा"वित्यादिना छेदविनिमये, यथा {२१७/३६/१ | २/१/३६} । एकगुणं तदेव । षट्त्रिंशद्गुणौ द्वौ जाता द्वासप्ततिः, षट्त्रिंशद्गुण एको जाता षट्त्रिंशत्, यथा {७२/३६} । समच्छेदत्वात् सप्तदशाधि(क)द्विशतमध्ये द्वासप्ततिक्षेपे जाता एकोननवत्यधि(क)द्विशती षट्त्रिंशच्छेदा {२८९/३६} । एतेन दृश्यैक्यं जातम् । ततो द्वयो"विषमसमे"त्यादिना उपर्यङ्कस्य मूलं सप्तदश, अधश्च षट्, यथा {१७/६} । मूलद्विभागः षट्छेदाः सप्तदश प्राक् कृताः । समच्छेदत्वात् सप्तदशमध्ये सप्तक्षेपे जाता चतुर्विंशतिः षट्छेदा । अनयोः षड्भिरपवर्ते उपरि चत्वारः, अधश्चैकः, यथा {४/१} । अनयोः कृतिः उपरि षोडश, अधश्चैकः, यथा {१६/१} । एकभक्तं च तदेव । लब्धं मधुकरप्रमाणम् ॥

अस्य घटना—षोडशमध्याद्दलियुगं पद्मे दृष्टम् । शेषस्य चतुर्दशकस्यार्धं सप्त । सप्तानां च सप्तमोऽंश एकस्तद्युक्ता अष्टौ करिकटे कृताः । पूर्वस्य प्रथमाङ्कस्य षोडशकस्य मूलं च चत्वारो मल्लिकां गताः । अन्ते च दृष्टद्वयम्, यथा {२/७/१/४/२} ।

एषां योगे षोडश ॥

तृतीयोदाहरणमाह—

कश्चिद् धनी पादमदाद् द्विजाय
शेषत्रिभागं त्वथ शेषपादम् ।
सर्वस्वमूलं च दलं तथाऽन्यद्
बभूव निःस्वस्य कियद् धनं तत् ? ॥[1]

{दृ १/४ | १/३ | १/४ | १/१ | १/२} । दृष्टशब्दं विनाऽप्यादावन्ते चाङ्को दृश्यसञ्ज्ञः । रूपस्यैकच्छेदस्य शेषांशच्छेदाभ्यासम(?)"मंशच्छेदा"वित्यादिना छेदविनिमये एकगुणं तदेव । त्रिगुणावेकौ जातास्त्रयः । त्रिच्छेदाश्चतुर्गुणावेकौ जाताश्चत्वारः । चत्वारश्चतुश्छेदा रूपस्थाने, यथा {३/३ | ४/४} । ततोऽंशस्यैकस्य त्रिकात् पाते जातौ द्वौ त्रिकच्छेदौ, चतुर्भ्य एकपाते जातास्त्रयश्चतुश्छेदाः, यथा {२/३ | ३/४} । एतन्निरंशरूपम् । अस्याहतिः—द्विगुणास्त्रयो जाताः षट्, त्रिगुणाश्चत्वारो जाता द्वादश,

---

१ उपजातिः ।

यथा $\left\{\begin{smallmatrix}१\\२\end{smallmatrix}\right\}$। अस्य हरत्वात् "कृत्वा परीवर्तन"मित्यादिना उपरि द्वौ, अधश्चैकः, यथा $\left\{\begin{smallmatrix}२\\१\end{smallmatrix}\right\}$। ततो दृश्यार्धेन $\left\{\begin{smallmatrix}१\\२\end{smallmatrix}\right\}$ सङ्गुणना, यथा—एकगुणौ द्वावुपरि, अधो द्वावेव $\left\{\begin{array}{c|c}२&ह\\२&\end{array}\right\}$। मूलमेको द्विगुणो जातौ द्वौ, अधश्च एकगुण एकच्छेदः स एव, यथा $\left\{मू\begin{smallmatrix}२\\१\end{smallmatrix}\right\}$। एतेन निरंशरूपाहतिभक्तदृश्यमूले इति सिद्धम्। ततः पदस्य-द्विकस्य त्र्यंशकमर्धमेकः तस्य वर्गोऽप्येकच्छेद एकवर्गोऽप्येकः, यथा $\left\{\begin{smallmatrix}१\\१\end{smallmatrix}\right\}$। तद्-योगार्थं दृश्यच्छेदनसम"मंशच्छेदा"वित्यादिना छेदविनिमये, यथा $\left\{\begin{array}{c|c|c}२&१&मू\\२&१&\\१&२&\end{array}\right\}$। द्विगुणमेकद्वयं द्विकद्वयं जातम्, एकगुणं च तदेव, यथा $\left\{\begin{smallmatrix}२\\३\\२\end{smallmatrix}\right\}$। समच्छेदत्वाद् द्विकमध्ये द्विक्षेपे जाताश्चत्वारो द्विच्छेदाः। एतेन पदत्र्यंशकवर्गयुक्तादिति सिद्धम्। मूलदृश्येनैकेन समच्छेदेन सम"मंशच्छेदा"वित्यादिना अर्धापवर्ते जातैकद्विच्छेदयोः, यथा $\left\{\begin{array}{c|c}१&४\\४&२\\१&२\end{array}\right\}$। प्राच्याङ्क एकगुणः स एव। पराङ्के द्विगुणाश्चत्वारो जाता अष्टौ। द्विगुणौ द्वौ जाताश्चत्वारः, यथा $\left\{\begin{array}{c|c}१&८\\४&४\end{array}\right\}$। समच्छेदत्वादष्ट-मध्ये एकक्षेपे जाता नव चतुश्छेदाः $\left\{\begin{smallmatrix}९\\४\end{smallmatrix}\right\}$। एतद् दृश्यैक्यम्, तस्मान्मूलं नवानां त्रयश्चतुर्णां मूलं द्वौ, यथा $\left\{\begin{smallmatrix}३\\२\end{smallmatrix}\right\}$। पदार्धमेकमेकच्छेदम्, एतद्योगार्थं-"मंशच्छेदा"वित्यादिना छेदविनिमये यथा $\left\{\begin{array}{c|c}३&१\\२&१\\१&२\end{array}\right\}$। एकगुणं तदेव, द्विगुणावेकको द्विकं द्वयं जातम्, यथा $\left\{\begin{array}{c|c}३&२\\२&२\end{array}\right\}$। ततस्त्रिकमध्ये द्विकक्षेपे जाताः पञ्च द्विच्छेदाः, यथा $\left\{\begin{smallmatrix}५\\२\end{smallmatrix}\right\}$। पदार्धयुक्तं मूलमिति सिद्धम्। स्वनिघ्नं स्थानद्वयेऽपि पञ्चगुणाः पञ्च पञ्चविंशतिः, द्विगुणौ द्वौ जाताश्चत्वारः, यथा $\left\{\begin{smallmatrix}२५\\४\end{smallmatrix}\right\}$। अधोऽङ्केनोपर्यङ्कस्य भागे लब्धं षट्, शेषं चैकश्चतुश्छेदः, यथा $\left\{\begin{smallmatrix}६\\१\\४\end{smallmatrix}\right\}$। सपादाः षट् द्रम्मा निःस्वस्य-दरिद्रस्य जाताः॥

अस्य घटना—सपादषट्मध्यात् त्रिभागौ द्वौ। शेषचतुष्कस्य पादं एकम्। सर्वस्वस्य सपादषट्कस्य भागानुबन्धजातित्वात् "छेदनिघ्ने"त्यादिना $\left\{\begin{smallmatrix}६\\१\\४\end{smallmatrix}\right\}$। छेदेन चतुर्भिर्गुणिताः षट्जाता चतुर्विंशतिः। एकरूपक्षेपे पञ्चविंशतिः। अस्य मूलं पञ्च, चतुर्णां मूलं द्वौ, यथा $\left\{\begin{smallmatrix}५\\२\end{smallmatrix}\right\}$। सार्धद्विलक्षणं द्वाभ्यां भक्तत्वात् तथा दलमर्धं च दृश्यम्, यथा $\left\{\begin{array}{c|c|c|c|c}१&२&१&२&१\\४&१&१&१&२\\&&&२&\end{array}\right\}$। एषा"मंशच्छेदा"वित्यादिना पर्यन्ते चतुश्छेदा पञ्चविंशतिः। ततश्चतुर्भक्तायां पञ्चविंशतौ लब्धं सपादषट्कम्। प्रक्रिया च सुखत्वान्न दर्शिता। एवमुभयाग्रदृश्यजातिः समाप्ता॥

( भिन्नभागदृश्यजातौ करणसूत्रं वृत्तम्— )

**दृश्यांशकोने विहृतेऽथ रूपे स्तम्भांशघातेन च तत्फलं स्यात्।७४।**[1]

व्याख्या—दृश्ये ये दृश्यकास्तैरूनं रूपं तत्र दृश्यांशकोने रूपे अदृश्या

---

१ इन्द्रवज्रा।

ये स्तम्भांशास्तेषां घातो–गुणनं तेन स्तम्भांशघातेन विहृते प्राक्कृतदृश्यांशकोनरूपे तत्फलं तस्य स्तम्भस्य फलमिष्टत्वात् प्रमाणं स्यात् ॥

अत्रोद्देशके वृत्ते उदाहरणमाह—

स्तम्भस्य भागेन च सप्तमेन
सन्ताडितः स्तम्भदशांशकोऽयम् ।
सखेऽंशकार्धं परिदृष्टमद्य
स्तम्भप्रमाणं कथयाशु सत्यम् ॥ ७५ ॥[1]

न्यासः–{ १/७ | १/१० | दृ १/२ } । प्रागुक्तयुक्त्या रूपात्–जातद्विच्छेदद्विकात् दृश्यांश एकपाते जातौ द्विच्छेद एक इति दृश्यांशकोने रूपे, यथा { १/२ } । स्तम्भांशयोर्यथा { १/७ | १/१० } । प्रभागजातौ "अंशाभ्यास"मित्यादिना अंशयोः–एकयोर्मिथो गुणने एक एव, छेदयोः–सप्तदशकयोर्मिथो गुणने जाता सप्ततिरिति एकः सप्ततिच्छेदः स्तम्भांशघातः, यथा { १/७० } । अयं हरः । ततः "कृत्वा परीवर्तन"मित्यादिनोपरि सप्ततिः, अधश्चैकः, यथा { ७०/१ } । भाज्यं रूपमेको द्विकच्छेदः, यथा { १/२ } । अत्र कुलिशापवर्तनाद् द्वा(द्वय)पवर्ते सप्ततेरर्धं पञ्चत्रिंशत्, यथा { ३५/१ } । द्वयोरर्धे एकः, यथा { १/१ } । सङ्गुणना–एकगुणं तदेव । [एकगुण] एकच्छेदभक्तमपि तदेव । लब्धं पञ्चत्रिंशद्धस्ताः स्तम्भप्रमाणम्, यथा { ३५/१ } ॥

अस्य घटना–पञ्चत्रिंशद्धस्तानां सप्तमे भागे पञ्च । तैः पञ्चत्रिंशद्दशमे भागे सार्धहस्तत्रयं ताडितं जाताः सार्धदशहस्ता दृष्टा सार्धसप्तदश चादृष्टा । एषां योगे पञ्चत्रिंशत् हस्ताः { ३५ } । प्रभागजातिरियम् ॥

द्वितीयोदाहरणमाह—

त्रिपञ्चाशदंशेन वेणोर्हतो यो
द्विपञ्चाशकस्तद्गुणो हन्त दृष्टः ।
मया तत्त्वभागान् विभोर्विश्वतुल्यान्
विचिन्त्याशु मे वंशसङ्ख्यां वदार्य ! ॥ ७६ ॥[2]

न्यासेनैवास्य व्याख्या–{ ३/५० | ५/२५ | १३/२५ } । रूपस्य-एकच्छेदस्य "अंशच्छेदा"वित्यादिना जाता रूपस्थाने पञ्चविंशतिच्छेदा पञ्चविंशतिः । ततोऽस्या दृश्यांशकत्रयोदशपाते जाताः पञ्चविंशतिच्छेदा द्वादश, यथा { १२/२५ } । एतत् दृश्यांशकोनं रूपम् । प्रभागजातिवत् स्तम्भांशयोस्त्रिपञ्चकयोर्मिथो घाते जाताः पञ्चदश । छेदयोः पञ्चा-

---

१ उपजातिः । २ भुजङ्गप्रयातम् ।

शत्पञ्चविंशत्योर्मिथो घाते जाता पञ्चाशदधि(क)द्वादशशती, यथा {१५/१२५०} । अयं स्तम्भांशघातः । तस्य च हरत्वात् "कृत्वा परीवर्तन"मित्यादिना उपरि द्वादशशत्यादि, अधः पञ्चदश, यथा {१२५०/१५} । कुलिशापवर्तनं यथा—प्राग्वद् दृश्यद्वादशानां त्रिभिरपवर्ते चत्वारः, पञ्चदशानां त्रिभिरपवर्ते पञ्च; तथा पञ्चाशदधि(क)द्वादशशतानां पञ्चविंशत्या अपवर्ते जाताः पञ्चाशत्, पञ्चविंशतेः पञ्चविंशत्याऽपवर्ते एकः, यथा {५०/५ | ४/१} । ततः सङ्गुणना—चतुर्गुणाः पञ्चाशत् जाता द्विशती, एकच्छेदगुणाः पञ्च त एव । पञ्चभिर्द्विशत्या भागे यथा {२००/५} । लब्धं चत्वारिंशत् हस्ता वंशप्रमाणम्, यथा ४० ॥

अस्य घटना—चत्वारिंशतह(द्ध)स्तानां भाग एकोनविंशत्यङ्गुलान्यङ्गुलस्यैकः पञ्चभागः, त्र्यंशत्वात् त्रिगुणो जातं हस्तद्वयं नवाङ्गुलानि अङ्गुलस्य पञ्च भागास्त्रयः । अनेन चत्वारिंशतः पञ्चविंशतिपञ्चभागनिष्पन्ना अष्टहस्ता गुणिता एकोनविंशतिहस्ता अङ्गुलचतुष्कं अङ्गुलस्य पञ्च भागाश्चत्वारः । तथा चत्वारिंशतः पञ्चविंशतित्रयोदशभागनिष्पन्नहस्ता विंशतिरेकोनविंशत्यङ्गुलानि अङ्गुलस्य पञ्चभाग एकः । एषां योगे चत्वारिंशत्, यथा (४०) । एवं भिन्नभागदृश्यजातिः समाप्ता ॥

भागमूलजातौ करणसूत्रं वृत्तम्—

दृश्यात् पयोराशिहताल्लवाप्तात्
स्वमूलसंवर्गयुताच्च मूलम् ।
समूलमर्धीकृतवर्गितं च
भागाहतं स्यादिह यूथमानम् ॥ ७७ ॥[1]

(व्याख्या–) दृश्यांशकात् पयोराशिभिश्चतुर्भिर्हतात्—चतुर्गुणात् लवैराप्तात्—अंशैर्भक्तात् यस्य दृश्यस्य यन्मूलं तस्य संवर्गस्तद्गुणो वर्ग इति न्यायात् तेन युतात्र (?च्च) "विषमसमे"त्यादिना मूलं पश्चात् स्वमूलं स्वमूलाङ्कयुतम् । एतेन दृश्यं द्वयं त्रयं वा भवति मूलमपि द्विधा त्रिधा भवति लवा अपि द्विधा त्रिधा भवन्तीति ज्ञेयम् । पश्चादर्धीकृतं पश्चाद् वर्गितं—कृतवर्गं भागाहतं—यैर्भागैर्भागहाररीत्या भक्तं तैरेव भागैराहतं यूथमानं स्यात् ॥

अत्रोद्देशकवृत्ते उदाहरणमाह—

यूथाष्टांशस्य मूलं सजलजलधराकारमष्टादशघ्नं
शैलाग्रे सिन्धुराणां भ्रमति हि विगलद्दानधारार्द्रगण्डम् ।

---

१ उपजातिः ।

दृष्टाश्चाष्टादशान्ये हरिणपतिशिशुध्वानमाकर्ण्य भीताः
का सङ्ख्येयं गजानां गणय गणितवित्! चेदिहास्ति श्रमस्ते ७८। [1]

न्यासेनैवास्य व्याख्या—{ $\frac{१}{८}$ | मू $\frac{१}{१}$ | दृश्य $\frac{१८}{१}$ } । दृश्यमष्टादश। पयोराशिहतं चतुर्गुणा अष्टादश जाता द्वासप्ततिर्यथा लवाप्तात्। तथाहि अष्टच्छेदलवस्तस्य च हरत्वात् "कृत्वा परीवर्तन"मित्यादिना उपर्यष्टौ, अधश्चैकः, यथा { $\frac{८}{१}$ } । ततः सङ्गुणना—अष्टगुणा द्वासप्ततिर्जाता षट्सप्तत्यधि(क)पञ्चशती, एकच्छेदगुण एकः स एव, एकभक्तमपि तदेव। अनेन लवाप्तादिस्वमूलमष्टादश। अस्य वर्गश्चतुर्विंशत्यधि(क)त्रिशती, यथा ३२४। समच्छेदत्वात् षट्सप्तत्यधि(क)पञ्चशतमध्ये यथा ५७६ चतुर्विंशत्यधि(क)त्रिशतक्षेपे जाता नवशती एकच्छेदा, यथा{ $\frac{९००}{१}$ }। अस्य "विषमसमे"त्यादिना मूलं त्रिंशत् । समूलं मूलेन—अष्टादशकेन समच्छेदत्वात् सहितं जाता अष्टचत्वारिंशत्। अर्धीकृतं जाता चतुर्विंशतिः, वर्गितं चतुर्विंशतिवर्गः षट्सप्तत्यधि(क)पञ्चशती । भागाहतं—भागेनैकेनाष्टच्छेदेन आहतं उपर्यङ्केनाहतं तदेव, अधश्चाष्टगुण एको जाता अष्टौ। ततोऽष्टभिः षट्सप्तत्यधि(क)पञ्चशत्या, यथा { $\frac{५७६}{८}$ }। भागे लब्धं द्वासप्ततिः। यथा { ७२ }। एतद् गजयूथप्रमाणम्॥

अस्य घटना—द्वासप्ततिगजानामष्टांशो नव । तस्य मूलं त्रिकमष्टादशघ्नं जाता चतुःपञ्चाशत् शैलाग्रे चरति । दृष्टा अष्टादश { $\frac{५४}{१८}$ } । एषां योगे जाता द्वासप्ततिः॥

अथ मूलद्वयोपेतदृश्यद्वयस्योदाहरणवृत्तमाह—

द्वित्र्यंशमूलं द्युगतं नवघ्नं
नष्टं च शेषत्रिशराश्च मूलम्।
षडाहतं हंसकुलस्य दृष्टा
सखे! त्रिरष्टौ कति तेऽत्र सर्वे॥ ७९॥ [2]

(व्याख्या—) द्वौ त्र्यंशौ तयोर्मूलं नवगुणं शेषत्रिलवभागा मूलं च षडाहतं नष्टं दृष्टा त्रिरष्टौ चतुर्विंशतिः। न्यासः—{ $\frac{२}{३}$ | मू $\frac{९}{१}$ | शेष $\frac{३}{५}$ | मू ६ | दृ २४ }। दृश्याङ्कश्चतुर्विंशतिश्चतुर्गुणा जाता षण्णवतिलवः। त्रिपञ्चभागाहरत्वात् "कृत्वा परीवर्तन"मित्यादिना उपरि पञ्च, अधस्त्रयः, यथा{ $\frac{५}{३}$ } । कुलिशापवर्तनम्—षण्णवतेस्त्रिभिरपवर्ते द्वात्रिंशत्, त्रयाणां त्रिभिरपवर्ते एकः, यथा { $\frac{३२}{१}$ | $\frac{५}{१}$ } । ततः सङ्गुणना—द्वात्रिंशतो मिथो गुणने षष्ट्यधि(क)शतम्। एकच्छेदगुण एकः स एव। एकभक्तश्च स एव,

---

१ स्रग्धरा। २ उपजातिः।

यथा $\begin{Bmatrix}160\\1\end{Bmatrix}$। लवाप्तादिति सिद्धम्। स्वमूलं प्रत्यासन्नत्वात् षट्। तद्वर्गः षट्त्रिंशत्। एतद्युक्तं षष्ट्यधि(क)शतं एकच्छेदम्, यथा $\begin{Bmatrix}196\\1\end{Bmatrix}$। "विषमसमे"त्यादिना मूलं चतुर्दश $\begin{Bmatrix}14\\1\end{Bmatrix}$। समूलं षड्युतं जाता विंशतिः। अर्धीकृतं दश, वर्गितं च जातं शतम्, यथा $\begin{Bmatrix}100\end{Bmatrix}$। भागस्त्रिपञ्चभिराहतं(? तः)। तथाहि–त्रिगुणं शतं त्रिशती, एकः पञ्चगुणः पञ्च, जाता पञ्चच्छेदा त्रिशती, यथा $\begin{Bmatrix}300\\5\end{Bmatrix}$। अनयोः पञ्चभिरपवर्ते उपरि षष्टिः, अधश्चैकः, यथा $\begin{Bmatrix}60\\1\end{Bmatrix}$। अन्तरा अङ्का गताः, प्रथममूलाङ्कः स्थितः प्रत्यासन्नत्वात्। दृश्याङ्क एकच्छेदा षष्टिश्चतुर्गुणा चत्वारिंशदधि(क)द्विशती एकच्छेदा। लवैः प्रथमोक्तैर्द्वित्रिभागैर्हरत्वात् "कृत्वा परीवर्तन"मित्यादिनोपरि त्रयः, अधश्च द्वौ, यथा $\begin{Bmatrix}3\\2\end{Bmatrix}$। कुलिशापवर्तनम्–चत्वारिंशदधि(क)द्विशत्या अर्धापवर्ते विंशत्यधि(क)शतम्, द्वयोरर्धापवर्ते एकः, यथा $\begin{Bmatrix}120 & 3\\1 & 1\end{Bmatrix}$। ततः सङ्गुणना–त्रिगुणं विंशत्यधि(क)शतं जाता षष्ट्यधि(क)-त्रिशती। एकच्छेदगुण एकः स एव। तद्भक्तश्चाङ्कः स एव। लवाप्तादिति सिद्धम्। स्वमूलं नव, तद्वर्ग एकाशीतिः। इयं षष्ट्यधि(क)त्रिशतमध्ये क्षिप्ता जाता एकचत्वारिंशदधि(क)चतुःशती एष(क)च्छेदा। "विषमसमे"त्यादिना मूलमेकविंशतिः। समूलं नवयुक्तं जाता त्रिंशत्। अर्धीकृतं पञ्चदश, वर्गितं च पञ्चविंशत्यधि(क)द्विशती। भागैर्द्वित्रिभिराहतम्। द्विगुणा पञ्चविंशत्यधि(क)-द्विशती जाता पञ्चाशदधि(क)चतुःशती। त्रिगुण एको जातास्त्रयः, यथा $\begin{Bmatrix}450\\3\end{Bmatrix}$। अधोऽङ्केनोपर्यङ्कस्य भागे लब्धं सार्धशतम्, यथा $\begin{Bmatrix}150\end{Bmatrix}$। एतत् हंस-कुलप्रमाणम्। भागैर्मूलेन च निष्पन्नत्वात् दृश्यस्य भागमूलदृश्यजातिः समाप्ता॥

अस्य घटना–सार्धशतस्य द्वौ त्र्यंशौ शतं तस्य मूलं १० नवघ्नं जाता नवतिः नभोगता। शेषषष्टिपञ्चभक्ताया लब्धं द्वादश। एतत्त्रयं षट्त्रिंशत्। अस्य मूलं षट्, पञ्च (? षडा)हतं षट्त्रिंशदेतन्नष्टम्। दृष्टा चतुर्विंशतिः, यथा $\begin{Bmatrix}90\\36\\24\end{Bmatrix}$। एषां योगे सार्धशतम्।

हीनवर्गजातौ करणसूत्रं वृत्तमाह—

स्वांशोद्धृतच्छेद इह द्विधाऽसा-  
वूनाहतोऽन्यार्धकृतिप्रयुक्तः।  
दृश्योनितस्तत्पदमूनमन्य-  
दलान्वितं भागविभक्तमाप्तम्॥ ८०॥[1]

व्याख्या–स्वांशैरुद्धृतः–ऊर्ध्वं नीतः स्वकस्याधोगमनेन यश्छेदः स्वांशोद्धृत-

---

१ उपजातिः।

च्छेदः इह–हीनवर्गजातौ ऊनाङ्कसङ्घटितत्वात् द्विधा स्थाप्य स्थानद्वये अधः कृतांशमूर्ध्वच्छेदः कार्यः । पश्चादेक ऊनेन पृच्छकोपदिष्टेन हीनाङ्केनाहतो–गुणितोऽन्यस्य द्वितीयस्थानस्थितस्याधोऽंशको द्विच्छेदाङ्कस्य यदर्धं तस्य कृतिः–वर्गस्तेन प्रयुक्तसमच्छेदतया युक्तः । पश्चात् सदृशच्छेदपूर्वं दृश्येनोनितः पश्चात् तदङ्कस्य पदं–मूलं तत्पदम् । तत ऊनं–उद्दिष्टन्यूनाङ्कपदं प्रागुक्तान्यदलेन समच्छेदतया अन्वितं–पश्चात् तत्पदमध्ये समच्छेदतया मिलितं भागैः प्रयुक्तैर्येषामूर्ध्वाधो विपर्ययः कृतस्तैर्भागहाररीत्या सङ्गुणनादिकयाऽपि भक्तं सत् आप्तं–यल्लब्धं स इष्टराशिरित्यर्थः । अन्यदलान्वितमूनं तत्पदमध्ये क्षेप्तव्यमिति सूत्रे अनुपदिष्टमप्युक्तम् । भागविभक्तमप्युक्तत्वात् ॥

अत्रोद्देशकवृत्ते उदाहरणमाह—

त्रिपञ्चभागः शिखिनां षडूनो
वर्गीकृतः क्रीडति चान्तरागः ।
दृष्टा निविष्टास्तु वनान्तरे षड्
यूथप्रमाणं कथयाशु तेषाम् ॥ ८१ ॥[1]

न्यासेनैवास्य व्याख्या—{ ३/५ | ऊ ६/१ | दृ ६/१ } स्वांशेन–त्रिकेण छेदः पञ्चलक्षणः–उद्धृतः–उपरि नीतो यथोपरि पञ्च, अधस्त्रयः, स्थानद्वये लेख्यौ, यथा { ५/३ | ५/३ } । अनयोर्मध्ये असौ एकोऽङ्कः पञ्चत्रिकलक्षण ऊनेन–षड्भिराहतो जातास्त्रिंशत् त्रिच्छेदाः, यथा { ३०/३ } । अस्य कृतिः पञ्चविंशतिः । षट्छेदकृतिः षट्त्रिंशत् । ततः सो"ऽंशच्छेदा"वित्यादिना त्रिंशदधश्छेदस्य–त्रिकस्य त्रिभिरपवर्ते एकः, षट्त्रिंशतस्त्रिभिरपवर्ते द्वादश, ततश्छेदविनिमये यथा { ३० / ३ / १२ | २५ / ३६ / १ } । द्वादशगुणा त्रिंशज्जाता षष्ट्यधि(क)त्रिशती, द्वादशगुणास्त्रयो जाताः षट्त्रिंशत्, यथा { ३६०/३६ } । पराङ्क एकगुणस्तथैव । समच्छेदत्वात् षष्ट्यधि(क)त्रिशतीमध्ये पञ्चविंशतिक्षेपे जाता पञ्चाशीत्यधि(क)त्रिशती षट्त्रिंशच्छेदा, यथा { ३८५/३६ } । दृश्येन–षट्केन एकच्छेदेन ऊनितस्तथाहि–"अंशच्छेदा"वित्यादिना छेदविनिमये यथा { ३८५ / ३६ / १ | ६ / १ / ३६ } । पूर्वाङ्क एकगुणः स एव । पराङ्के षट्त्रिंशद्गुणाः षड् जाता षोडशाधि(क)द्विशती, षट्त्रिंशद्गुण एकः षट्त्रिंशत्, यथा { २१६/३६ } । "कृतसमहरराश्योरंशविश्लेषमाहु"रित्युक्त्या पञ्चाशीत्यधि(क)त्रिशतीमध्यात् षोडशाधि(क)द्विशतविश्लेषे शेषमेकोनसप्ततिशतं षट्त्रिंशत्, यथा { १६९/३६ } । तत्पदं तयोः प्राग्लिखितयोरङ्कयोः यथोक्तं मूलं "विषमसमे"त्यादिनोपरि त्रयोदश,

---

१ उपजातिः ।

अधश्च षट्, यथा {१३/६}। तत ऊनं षट् एकच्छेदं मण्डयित्वा अन्यदलं च पञ्च षट्छेदं प्रागुक्तम्, यथा {६/१ | ५/६}। "अंशच्छेदा"वित्यादिना विनिमये {६/१/६ | ५/६/१}। षड्गुणाः षट् षट्त्रिंशत्, षड्गुण एकः षट्, पराङ्क एकगुणः स एव। समच्छेदत्वात् त्रिंशन्मध्ये षट्क्षेपे जाता एकचत्वारिंशत्। समच्छेदत्वात् त्रयोदशकमूलमध्ये क्षिप्ता जाता चतुःपञ्चाशत् षट्छेदा, यथा {५४/६}। अनयोः षड्भिरपवर्ते उपरि नव, अधश्चैकः, यथा {९/१}। भागैः प्रागुक्तैस्त्रिपञ्चरूपैर्हरत्वात् "कृत्वा परीवर्तन"मित्यादिनोपरि पञ्च, अधस्त्रयः, यथा {५/३}। कुलिशापवर्तेन नवानां त्रिभिरपवर्ते त्रयः, त्रयाणां त्रिभिरपवर्ते ततः (? एकः), यथा {३/१ | ५/१}। ततः सङ्गुणना–पञ्चगुणास्त्रयो जाताः पञ्चदश। एकगुण एकच्छेदः स एव। एकभक्तश्चाङ्कः स एव। पञ्चदश शिखियूथप्रमाणम्॥

अस्य घटना–पञ्चदशानां पञ्चभक्तानां लब्धं त्रयस्त्रिगुणिता नव पङ्क्तो जातास्त्रयस्तस्य वर्गो नव, दृष्टाश्च षट् {९/६}। एषां योगे पञ्चदश॥

अथ द्वितीयोदाहरणवृत्तमाह—

गणाष्टभागस्त्रिगुणो दलीकृतो
विष्कैस्तथा षोडशभिर्विवर्जितः।
स्वसङ्गुणः क्रीडति पर्वतोदरे
चतुर्गुणास्ते विचरन्ति कानने॥ ८२॥[1]

व्याख्या—गणस्याष्टभागोऽष्टौ त्रिगुण इत्युपर्यंशत्रिलक्षणो दलीकृतस्त्रयो नार्धं सहते इति च्छेदलक्षणाष्टकस्य द्विगुणतायां षोडश तथा विष्कैः "विष्को विंशतिवर्षः स्यात्" इति प्रतीतम्, ते षोडश चतुर्गुणाश्चतुःषष्टिः, शेषं स्पष्टम्। न्यासः—{३/१६ | ऊ १६ | दृ ६४}। स्वांशोद्धृतच्छेदौ स्थानद्वये यथा {१६/३ | १६/३}। एकोङ्क ऊनेन षोडशभिराहतो जाता षट्पञ्चाशदधि(क)द्विशती त्रिच्छेदा, यथा {२५६/३}। अन्यस्य द्विस्थषोडशकस्यार्धं अष्टौ त्रिच्छेदाः, यथा {८/३}। अनयोः कृतिरुपरि चतुःषष्टिः, अधश्च नव, यथा {६४/९}। "अंशछेदा"वित्यादिना छेदयोः त्रिनवकयोस्त्रिभिरपवर्ते जातैकयोर्विनिमये, यथा {२५६/३/३ | ६४/९/१}। त्रिगुणा षट्पञ्चाशदधि(क)द्विशती जाता अष्टषष्ट्यधि(क)सप्तशती, त्रिगुणास्त्रयो जाता नव, यथा {७६८/९}। पराङ्कः ६४ एकगुणः स एव। उभयोर्योगे द्वात्रिंशदधि(क)शताष्टकं नवच्छेदम्, यथा {८३२/९}।अन्यार्धकृतिप्रयुक्त इति सिद्धम्। दृश्येन–चतुःषष्ट्या

१ वंशस्थविलम्(?)।

एकच्छेदया ऊनिता "ऽशच्छेदा" वित्यादिना छेदविनिमये यथा {८३२/९/१ | ६४/९/९} । एकगुणः स एव । पराङ्के नवगुणा चतुःषष्टिर्जाता षट्सप्तत्यधि(क)पञ्चशती नवच्छेदा, (यथा) {५७६/९} । समहरराशित्वाद् द्वात्रिंशदधि(क)शताष्टकात् षट्सप्तत्यधि(क)पञ्चशतपाते जाता षट्पञ्चाशदधि(क)द्विशती नवच्छेदा, यथा {२५६/९} । तलयोर्द्वयोः पदं—"विषमसमे" त्यादिना मूलं उपरि षोडश, अधश्च त्रयः, यथा {१६/३} । अन्यत्र ऊनाङ्कः षोडश एकच्छेदाः । अन्यस्य प्रागुक्त-द्विस्थस्य दलमष्टत्रिलक्षणं "अंशच्छेदा" वित्यादिना विनिमये यथा {१६/१/३ | ८/३/१} । त्रिगुणाः षोडश जाता अष्टचत्वारिंशत्; त्रिगुण एको जातास्त्रयः, यथा {४८/३} । एकगुणः पराङ्कः स एव । अनयोर्योगे जाताः षट्पञ्चाशत् त्रिच्छेदाः, यथा {५६/३} । एतदन्यदलान्वितमूनं प्राग्लिखिततत्पदस्य—षोडशकस्य समच्छेदत्वात् मध्ये क्षिप्तं जाता द्वासप्ततिस्त्रिच्छेदा, यथा {७२/३} । अनयोस्त्रिभिरपवर्ते उपरि चतुर्विंशतिः, अधश्चैकः, यथा {२४/१} । भागैर्हरत्वात् "कृत्वा परीवर्तन"-(? मित्यादिना) विपर्यस्तैस्त्रिषोडशभिर्विभक्तम् । त्रयाणां त्रिभिरपवर्ते एकः । चतुर्विंशतेस्त्रिभिरपवर्ते अष्टौ । एतत् कुलिशापवर्तनम्, यथा {८/१ | १६/१} । सङ्गुणना—षोडशगुणा अष्टौ अष्टाविंशत्यधि(क)शतम् । एकच्छेदगुण एकः स एव । तद्भक्तश्चाङ्कः स एव लब्धः {१२८} । एतद् गजयूथप्रमाणम् ॥

अस्य घटना—अष्टाविंशत्यधि(क)शतस्याष्टमभागः षोडश, त्रिगुणोऽष्टचत्वारिंशत्, दलीकृतश्चतुर्विंशतिः, विष्कषोडशरहितो जाता अष्टौ । अयं स्वसङ्गुणोऽष्टगुणा अष्टौ चतुःषष्टिः पर्वते क्रीडति दृष्टाश्च चतुःषष्टिः, यथा {६४/६४} । अनयोर्योगेऽष्टाविंशत्यधि(क)शतम्, यथा {१२८} । एवं हीनवर्गजातिः समाप्ता ॥

विपरीतोद्देशके करणसूत्रं वृत्तमाह—

गुणो हरो हरो गुणः, पदं कृतिः कृतिः पदम् ।
क्षयो धनं धनं क्षयः, प्रतीपके तु दृश्यते ॥ ८३ ॥[1]

व्याख्या—यत् यत् पृच्छक उद्दिशति गुणनादिकं तत्तद्विपरीतं हरादिकं कार्यमिति विपरीतोद्देशकः । तत्र यो गुणकोऽङ्क उद्दिष्टः स हरो भागदायी कार्यः, यो हरो भागदायी उद्दिष्टः स गुणकः, तथा योऽङ्कः पदं—मूलं स कृतिः—वर्गः, तथा योऽङ्कः कृतिः स पदं—मूलं, तथा क्षयो—हीनो योऽङ्कः स धनं मध्यक्षेप्यस्तथा योऽङ्को धनं मध्यक्षेप्यः स क्षयो—हीनः कार्यः इति सम्बन्धः ॥

---

१ प्रमाणिका ।

अत्रोद्देशकवृत्ते उदाहरणमाह—

यः पञ्चघ्नो नवभिरधिको मूलभावं प्रपन्नो
द्वाभ्यामूनस्तदनु कृतितां प्रापितो रूपहीनः ।
भक्तोऽष्टाभिर्गणक! नियतं त्रीणि रूपाणि जातः
कोऽसौ राशिर्भवति वद मे वेत्सि चेन्मित्र! पाटीम् ॥८४॥[1]

न्यासेनैवास्य व्याख्या—{गु०५ध९मू१ऊ२कृति१हीन१भागु८दृश्यरूप३} । अत्र विपरीतोद्देशकत्वात् प्रतिलोमतस्त्रयोऽष्टगुणा जाता चतुर्विंशतिः । तन्मध्ये रूप एकक्षेपे जाता पञ्चविंशतिः । अस्या मूलं पञ्च द्वाभ्यां युक्ताः सप्त । एषां कृतिरेकोनपञ्चाशत् । नवहीना जाता चत्वारिंशत् । अस्याः पञ्चभिर्भागे लब्धं रूपाण्यष्टौ, यथा ८ ॥

अस्य घटना—क्रमेणैव यो गुणः स गुणः हरस्तु हर एवेत्यादिना, तथाहि—अष्टौ पञ्चगुणा जाता चत्वारिंशत् । नवभिरधिको जाता एकोनपञ्चाशत् । अस्य मूलं सप्त । द्वाभ्यामूना जाताः पञ्च । एतत्कृतिः पञ्चविंशतिः । रूपहीना चतुर्विंशतिः । अष्टभक्ता लब्धं दृश्यरूपत्रयं प्रागुक्तम् ॥

लीलावत्यां तु भागाधिकोनप्रक्रिया दर्शिता, तथाहि—

[2]"छेदं गुणं गुणं छेदं, वर्गं मूलं पदं कृतिः(? तिम्) ।
ऋणं स्वं स्वं ऋणं कुर्याद्, दृश्यराशिप्रसिद्धये ॥"[3]

स्पष्टः ।

[4]"अथ स्वांशेऽधिकोने तु, लवाढ्योनो हरो हरः ।
अंशस्त्वविकृतस्तत्र, विलोमे शेषमुक्तवत् ॥"[5]

व्याख्या—स्वांशे अधिके स्वचरणाद्यन्विते हरश्छेदो लवाढ्यश्चरणाद्यन्वितश्चतुष्कस्तेनोनू(? नो)र्ध्वच्छेदो गुणनीयः । पश्चादूर्ध्वांशगुणनायां विलोमरीत्या अधिको यत्र तत्र हीन इति ज्ञेयम् । यः क्षिप्तोऽङ्कश्छेदान्तस्तमेवाङ्कमाकृष्य स गुणकः कार्य इत्येकं तत्त्वम् । यदा तु स्वांशे ऊने स्वत्र्यंशादिहीने तदा हरच्छेदः स्वलवैरूनः कार्यः । तेन तूर्ध्वच्छेदो गुणनीयः । पश्चादूर्ध्वांशगुणनायां विलोमत ऊनस्थाने इत्युक्त इति ज्ञेयम् । ततो लवयुक्ताधश्छेदो गुणकः कार्यः, परं अंशस्तु अविकृतो न भञ्जनीयः । शेषमुक्तवत् छेदं गुणं गुणमित्यादि तथैव ॥

---

१ मन्दाक्रान्ता । २,४ प्रेक्ष्यतां नवमं पृष्ठम् । ३,५ अनुष्टुप् ।

य[1]स्त्रिघ्नस्त्रिभिरन्वितः स्वचरणैर्भक्तस्ततः सप्तभिः
स्वत्र्यंशेन विवर्जितः स्वगुणितो हीनो द्विपञ्चाशता ।
तन्मूलेऽष्टयुते हृते च दशभिर्जातं द्वयं ब्रूहि तं
राशिं वेत्सि हि चञ्चलाक्षि! विमलां बाले! विलोमक्रियाम् ॥८५॥[2]

न्यासः—{गु ३ खच ३/४ भागु ७ स्वत्र्यं ३ स्वगु १ हीन ५२ मू १ ध ८ भा १० दृश्य २}। वैपरीत्येन दृश्यं द्वौ दशगुणौ जाता विंशतिः। अष्टहीना जाता द्वादश। एतत्कृतिश्चतुश्चत्वारिंशदधि(क)शतम्। अस्य मध्ये द्विपञ्चाशत्क्षेपे जातं षण्णवत्यधि(क)शतम्। अस्य मूलं चतुर्दश स्वत्र्यंशहीनम्, यथा {१४/१, ०१/३}। स्वत्र्यंशहीनमित्युक्तं तदधस्त्रिको हरः स्वांशेनैकेन न्यूनः कार्यो जातौ द्वौ। आभ्यामूर्ध्वच्छेदे एको गुणितो जातौ द्वौ। तदूर्ध्वांशगुणनायां विपरीतत्वात् हीनस्थाने अधिकं गतोऽधोहरद्वयं योऽङ्क एक आकृष्टस्तेन युतं जातास्त्रयस्तद्गुणाश्चतुर्दश जाता द्विचत्वारिंशद् द्विच्छेदा {४२/२}। अनयोरर्धापवर्ते एकविंशतिरेकच्छेदा, यथा {२१/१}। सप्तगुणा एकविंशतिर्जातं सप्तचत्वारिंशदधि(क)शतमेकच्छेदम्, यथा {१४७/१}। त्रिभिरन्वितः स्वचरणैर्यथा {१४७/१, १/३/४}। अधिके स्वांशे लवैस्त्रिभिरधिको—युतो अधोहरो जाताः सप्त। तद्गुण ऊर्ध्वच्छेद एको जाताः सप्त। विपरीतत्वादधिकस्थाने हीन इति कृत्वा ये क्षिप्तास्त्रयस्तैरूनाः सप्त जाताश्चत्वारः। एतद्गुणं सप्तचत्वारिंशदधि(क)शतं जातं अष्टाशीत्यधि(क)पञ्चशतं सप्तच्छेदम्, यथा {५८८/७}। त्रिघ्नः—त्रिगुणाः सप्त एकविंशतिः। अनया भागे लब्धं अष्टाविंशतिरूपाणि ॥

अस्य घटना—रूपाण्यष्टाविंशतिस्त्रिघ्ना जाता चतुरशीतिः। त्रिभिरन्वितः स्वचरणैर्यथा {८४, ३/४}। "छेदनं छेदनेने"त्यादिना सवर्णिते जातमष्टाशीत्यधि(क)पञ्चशती चतुश्छेदा, यथा {५८८/४}। सप्तगुणाश्चत्वारो जाता अष्टाविंशतिः। अनया भागे लब्धमेकविंशतिः। स्वत्र्यंशेन विवर्जितः सप्ताकर्षणे जाताश्चतुर्दश। चतुर्दशगुणाश्चतुर्दश (जातं) षण्णवत्यधि(क)शतम्। द्विपञ्चाशता हीनो जातं चतुश्चत्वारिंशदधि(क)शतम्। अस्य मूलं द्वादश। अष्टयुता विंशतिः। दशभक्ता लब्धं दृश्यरूपद्वयम्, यथा २।

---

१ इदमेव पद्यं लीलावत्यां नवमे पृष्ठे वर्तते। २ शार्दूलविक्रीडितम्।

एवं विपरीतोद्देशके दृश्याददृश्यं अदृश्याद् दृश्यं आनीतमिति विपरीतोद्देशकः समाप्तः । एतावता एकत्रिंशत् परिकर्माणि समाप्तानि ॥

अथ द्वात्रिंशत्तमं त्रैराशिकमारभ्यते । तत्र करणसूत्रं वृत्तमाह—

प्रमाणमादौ विरमे त्वभीप्सा
फलं च मध्ये क्रियतेऽन्यजातिः ।
फलं प्रमाणेन भजेन्निहत्य
समिच्छया व्यस्तविधिश्च वामे ॥ ८६ ॥[1]

व्याख्या—वस्तुसङ्ख्या वा मूल्यसङ्ख्या वा या आदौ लिख्यते उच्यते तत् प्रमाणसञ्ज्ञं स्यात् । विरमे—पर्यन्ते वस्तुसङ्ख्या मूल्यसङ्ख्या वा उच्यते सा अभीप्सा—इच्छासञ्ज्ञा । परमादौ विरमे च सदृशजातिरेव कार्या । अयमर्थः—यद्यादौ वस्तुसङ्ख्या तदा पर्यन्तेऽपि वस्तुसङ्ख्यैव । तथा यद्यादौ मूल्यप्रमाणं तदा पर्यन्तेऽपि द्रव्यसङ्ख्यैव कार्या । अनयोः प्रमाणाभीप्सयोर्मध्येऽन्यजातिः फलसञ्ज्ञं कार्यम् । यद्यादौ अन्ते च वस्तु तदा मध्ये, यदा वा आदावन्ते च मूल्यसङ्ख्या तदा मध्ये वस्तुसङ्ख्या कार्या । इयं लिखनीया । एषा रीतिः भक्ता । ततः समिच्छया—पर्यन्ताङ्केन फलं—मध्याङ्कं निहत्य—गुणयित्वा प्रमाणेन भागहाररीत्या "कृत्वा परीवर्तन"मित्यादिकया आद्याङ्केन भजेत्—भागं ग्राहयेत् । यल्लब्धं तदिच्छाफलं स्यात् । तथा वामे—व्यस्तत्रैराशिके [व्यस्तत्रैराशिके] च [2]लीलावत्यामुक्तम्—यत्रेच्छावृद्धौ मूल्यस्य ह्रासो ह्रासे वा वृद्धिस्तत्र व्यस्तत्रैराशिकम् । तद्यथा—

"जीवानां वयसो मूल्ये, तौल्ये वर्णस्य [3]हेमनि ।
भिन्नहारे च राशीनां, व्यस्तत्रैराशिकं भवेत् ॥"[4]

इति परिच्छिन्नवामविधौ व्यस्तविधिः । प्रागुक्तवैपरीत्यं प्रमाणेन मध्याङ्कं निहत्य समिच्छया—अन्त्याङ्केन विभजेदिति लक्षणं कार्यम् ॥

अत्रोद्देशकवृत्ते प्रथमोदाहरणमाह—

कस्तूरिकायाः पलमर्धयुक्तं
द्रम्मैर्यदि द्वादशभिः सपादैः ।
अवाप्यते त्र्यंशयुतानि सप्त
तदा लभन्ते किमहो पलानि? ॥ ८७ ॥[5]

---

१ उपेन्द्रवज्रा २ प्रेक्ष्यतामष्टादशं पृष्ठम् । ३ 'हैमने । भागहारे च राशीनां व्यस्तं त्रैराशिकं' इति लीलावत्यां पाठः । ४ अनुष्टुप् । ५ उपजातिः ।

न्यासेनैवास्य व्याख्या, यथा {व १ १/२ | मू १२ १/४ | व ७ १/३ }। प्रथमाङ्के "छेदनिघ्ने"त्यादिना द्विगुण एको द्वौ, एको मध्ये त्रयो द्विच्छेदाः, यथा {३/२} । द्वितीयाङ्के चतुर्गुणा द्वादश जाता अष्टचत्वारिंशत्, सैका एकोनपञ्चाशत्, यथा {४९/४} । तृतीयाङ्के त्रिगुणाः सप्त जाता एकविंशतिः, सैका द्वाविंशतिस्त्रिच्छेदा {७७/३} । इयं भागानुबन्धजातिः । ततः समिच्छया—अन्त्याङ्कद्वाविंशत्या फलं—मध्याङ्कमेकोनपञ्चाशतं गुणयेत्। अष्टसप्तत्यधि(क)सहस्रं जातम्, यथा १०७८। अनयोश्छेदौ त्रिचतुष्कौ निहत्येतिवचनादंशैरंशाश्छेदैश्छेदा गुण्या इति न्यायात् त्रिगुणाश्चत्वारो जाता द्वादश, प्रागुक्तसहस्राद्यङ्काधश्छेदतया योज्याः, यथा {१०७८/१२} । अयं भाज्यो राशिः । आद्याङ्कस्य हरत्वात् "कृत्वा परीवर्तन"मित्यादिना उपरि द्वौ, अधस्त्रयः, यथा {२/३}। ततः कुलिशापवर्तनम्—द्वयोरर्धापवर्ते एकः, यथा {१/३} । द्वादशानामर्धापवर्ते षट्, यथा {१०७८/६}। ततः सङ्गुणना—उपर्यङ्क एकगुणः स एव। अधस्त्रिगुणाः षट् जाता अष्टादश । अनेनोपर्यङ्कस्य भागे लब्धं एकोनषष्टिद्रम्माः, यथा {५९} । उपरि शेषं षोडश, यथा {१६/१८} । अनयोरर्धापवर्ते उपर्यष्टौ, अधो नव {८/९} । द्रम्मा न लभ्यन्ते, ततः पणानयनाय षोडशभिरष्टौ गुणनीयाः । जातमष्टाविंशत्यधि(क)शतम्, यथा {१२८/९} । अस्य नवभिर्भागे लब्धं पणाश्चतुर्दश, यथा {१४}, शेषं द्वौ । पणा न लभ्यन्ते, अतः काकिण्यानयनाय द्वयोश्चतुर्भिर्गुणने भागं न लभते, अधोहरनवकत्वात्; ततः काकिणीस्थाने शून्यम्, यथा {०} । ततः कपर्दानयनाय विंशत्या अष्टौ गुणिता जातं षष्ट्यधि(क)शतम्, १६० । अस्य नवभिर्भागे लब्धं वराटकाः सप्तदश, भागाः {७/९} । आद्यन्तः(?) ।

ततो मूल्यन्यासे उदाहरणमाह—

कर्पूरस्य करीन्द्रदन्तमुसलच्छेदच्छविस्पर्धिनो
गन्धाहूतमधुव्रतस्य हि पलं सार्धं यदि प्राप्यते ।
द्रम्मैः षोडशभिस्त्रिभागसहितैस्त्रैराशिकं वेत्सि चेद्
विद्वन्! द्रम्मशतेन तत् कति पलान्याप्यन्त इत्युच्यताम् ॥८८॥[1]

{मू १६ १/३ | य १ १/२ | द्र १०० १ }। "छेदनिघ्ने"त्यादिना आद्याङ्के सवर्णिते जाता एकोनपञ्चाशत् त्रिच्छेदाः, यथा {४९/३} । एवं द्वितीयाङ्के जाता द्विच्छेदास्त्रयः, यथा {३/२}। ततः समिच्छया—शताङ्केनैकच्छेदेन गुणितास्त्रयो जाता त्रिशती, एकच्छेदगुणौ द्वौ तथैव, यथा {३००/२}। आद्याङ्कस्य हरत्वात् "कृत्वा परीवर्तन"मित्यादिनोपरि त्रयः, अधश्चैकोनपञ्चाशत् । ततः सङ्गुणना—त्रिगुणा त्रिशती जाता

---

1. शार्दूलविक्रीडितम् ।

नवशती। द्विगुणा एकोनपञ्चाशज्जाता अष्टनवतिः। अनया नवशत्या भागे, यथा {९००/९८}। लब्धं पलानि, यथा नव ९, शेषमुपर्यष्टादश। अनयोरर्धापवर्ते उपरि नव, अधश्चैकोनपञ्चाशत्, यथा {९/४९}। एते पलभागाः। ततोऽत्र प्रस्तावनोक्ततौल्यघटकानयनाय दशगुणा नव जाता नवतिः। इयमेकोनपञ्चाशता भक्ता लब्धं धटक एकः, यथा १, शेषमेकचत्वारिंशत्। ततो "निष्पावकानां युगलानि सप्त पाटीपटिष्ठा धटकं ब्रुवन्ति" इत्युक्त्या वल्लयानयनाय चतुर्दशगुणा एकचत्वारिंशज्जाता चतुःसप्तत्यधि(क)पञ्चशती। अस्या एकोनचत्वारिंशता भागे लब्धमेकादश वल्ला द्वादशमस्य चैकोनचत्वारिंशद्भागाः पञ्चत्रिंशत्, यथा वल्लाः {११ | ३५/३९}॥

अथ विशेषोदाहरणमाह—

शतस्याभाव्यके यत्र, षड् भवन्ति पृथक् सखे!।
तत्र रूपसहस्रस्य, मध्यतः किं भवेद् वद ॥ ८९ ॥[1]

अत्र शते षट् प्रक्षिप्य न्यासः—{१०६/१ | ६/१ | १०००/१}। अन्त्येन गुणितः ६०००। आदिमेन छेदांशविपर्यासेन गुणयित्वा {६०००/१०६}। भागे लब्धं रूपाणि ५६। शेषे उपर्यधो दलिते क्रमाद् रूपभागाः {३२/५३}॥

उदाहरणमाह—

कुङ्कुमस्य धटको दलयुक्तः, प्राप्यते यदि पणैश्चरणाढ्यैः।
पञ्चभिर्गणक! तत्पलमेकं, त्र्यंशकेन सहितं लभते किम्?॥ ९० ॥[2]

न्यासः—{१/१/२ | ५/१/४ | १/१/३}। "छेदनिघ्ने"त्यादिना क्रमात् जातं द्विच्छेदास्त्रयः, चतुश्छेदा एकविंशतिः, चतुश्छेदास्त्रयः (?त्रिच्छेदाश्चत्वारः), यथा {३/२ | २१/४ | ४/३}। समिच्छया—चतुर्भिर्मध्यैकविंशतिर्गुणिता जाता चतुरशीतिः, त्रिगुणाश्चत्वारो जाता द्वादशच्छेदाः, यथा {८४/१२}। आद्याङ्कस्य हरत्वात् "कृत्वा परी"त्यादिना उपरि द्वौ, अधस्त्रयः, यथा {२/३}। द्वयोः षण्णां (? द्वादशानां) चार्धापवर्ते क्रमेणैकः षट् च; तथा चतुरशीतेस्त्रयाणां च त्रिभिरपवर्ते क्रमादष्टाविंशतिरेकश्च, यथा {१/१ | २८/६}। एकगुणाऽष्टाविंशतिः सैव। एकच्छेदगुणाः षट् त एव, यथा {२८/६}। षड्भिरष्टाविंशतेर्भागे लब्धं द्रम्माश्चत्वारः, यथा ४; शेषमुपरि चत्वारः। पणानयनाय षोडशगुणा जाता चतुःषष्टिः। अस्याः षड्भिर्भागे लब्धं दश पणाः, शेषं उपरि चत्वारः। काकिण्यानयनाय चतुर्गुणा जाताः षोडश। एषां षड्भिर्भागे लब्धं द्वयम्, शेषमुपरि चत्वारः। ततो वराटकानयनाय विंशतिगुणा जाता अशीतिः।

१ अनुष्टुप्। २ स्वागता।

अस्याः षड्भिर्भागे लब्धं त्रयोदश कपर्दकाः, शेषमुपरि द्वौ, अधश्च षट् । अनयोरर्धापवर्ते उपर्येकः, अधश्च त्रयः, यथा { १/३ } । एते कपर्द(क)भागाः ॥

अथ क्रणविषयोदाहरणमाह—

अष्टभागरहितात् पणाष्टकात्
प्राप्यते सदलमानिकाद्वयम् ।
तत् सखे ! कथय मानिकाशतं
सत्रिभागसहितं किमाप्नुयात् ॥ ९१ ॥[1]

न्यासः—{ २ १/२ | ८ ०१/८ | १०० १/३ } । आद्याङ्के अन्त्याङ्के च "छेदनिघ्ने"त्यादिना क्रमाज्ज्ञातं द्विच्छेदाः पञ्च, एकाधि(क)त्रिशती त्रिच्छेदा । मध्याङ्के "भागापवाहनविधौ हरनिघ्नरूपे"त्यादिना अष्टगुणा अष्टौ जाता चतुःषष्टिः । एकापनयने त्रिषष्टिरष्टच्छेदा, यथा { ५/२ | ६३/८ | ३०१/३ } । समिच्छया—एकाधि(क)त्रिशत्या मध्याङ्कं—त्रिषष्टिं गुणयेत् । जाता अष्टादशसहस्रा नवशती त्रिषष्टिश्च, त्रिगुणा अष्टच्छेदा यथा चतुर्विंशतिः, यथा { १८९६३/२४ } । आद्याङ्कस्य हरत्वात् "कृत्वा परी"त्यादिनोपरि द्वौ, अधः पञ्च । कुलिशापवर्तनम्—द्वयोश्चतुर्विंशतेश्चार्धापवर्ते क्रमादेको द्वादश । [शत] एकगुण उपर्यङ्कः स एव, अधश्च पञ्चगुणा द्वादश जाता षष्टिः, यथा { १८९६३/६० } । अस्य पणाङ्कस्य षोडशगुणया षष्ट्या जाता(?त)षष्ट्यधि(क)नवशत्या भागे लब्धं द्रम्मा एकोनविंशतिः, यथा { १९ }, शेषमुपरि त्रयोविंशत्यधि(क)सप्तशती । पणानयनाय षोडशगुणा जाता एकादश सहस्राः पञ्चशत्यष्टषष्टिश्च, यथा { ११५६८/९६० } । अस्याः षष्ट्यधि(क)नवशत्या भागे लब्धं द्वादश पणाः, यथा १२; शेषमुपरि अष्टचत्वारिंशत् षष्ट्यधि(क)नवशतच्छेदाः, यथा { ४८/९६० } । काकिण्यानयनाय चतुर्गुणा अष्टचत्वारिंशत् जातं द्विनवत्यधि(क)शतम् । अत्र भागो न प्राप्यत इति काकिणीस्थाने शून्यम्, यथा { ० } । ततो द्वानवत्यधि(क)नवशतस्य षष्ट्यधि(क)नवशत्याश्च षण्णवत्याऽपवर्ते उपरि द्वौ, अधो दश, यथा { २/१० } । कपर्दकानयनाय विंशतिगुणौ द्वौ जाता चत्वारिंशत् । अस्या दशभागे लब्धं कपर्दकाश्चत्वारः, यथा { ४ } ॥

अथ द्वितीयं क्रणोदाहरणमाह—

द्रम्मैः षड्भिस्त्रिलवसहितैः प्राप्यते धान्यमानी-
युग्मं विद्वन् ! यदि सचरणं तन्ममाचक्ष्व शीघ्रम् ।
द्रम्माशीत्या दलसहितया हन्त यल्लभ्यते तत्
सङ्ख्याशास्त्रे यदि तव मतिः स्फारभावं प्रपन्ना ॥ ९२ ॥[2]

---

१ रथोद्धता । २ मन्दाक्रान्ता ।

न्यासः—{ ६/१/३ | २/१/४ | ८०/१/२ }। अथ क्रमेण "छेदनिघ्ने"त्यादिना त्रिच्छेदा एकोनविंशतिः, तथा चतुश्छेदा नव, तथा द्विच्छेदमेकषष्ट्यधि(क)शतम्, यथा { १९/३ | ९/४ | १६१/२ }। ततः समिच्छया—एकषष्ट्यधि(क)शतेन मध्याङ्कं—नव गुणयेत्। जाता चतुर्दशशत्येकोनपञ्चाशत्, द्विच्छेदगुणाश्चत्वारो जाता अष्टौ, यथा { १४४९/८ }। आद्याङ्कस्य हरत्वात् "कृत्वा परी"त्यादिनोपरि त्रयः, अधश्चैकोनविंशतिः, यथा { ३/१९ }। सङ्गुणना यथा—त्रिगुणा एकोनपञ्चाशदधि(क)चतुर्दशशती जाताश्चत्वारः सहस्राणि त्रिशती सप्तचत्वारिंशच्च, तथा अष्टगुणा एकोनविंशतिर्जातं द्विपञ्चाशदधि(क)शतम्, { ४३४७/१५२ }। अनेनोपर्यङ्कस्य भागे लब्धं मानिका अष्टाविंशतिः, यथा २८; शेषमुपरि एकाधि(क)नवतिः, यथा { ९१ }। हारिकानयनाय चतुर्गुणा जाता चतुःषष्ट्यधि(क)त्रिशती। अस्या द्विपञ्चाशदधि(क)शतेन भागे लब्धं हारिकाद्वयम्, यथा २। अनयोश्चतुर्भिरपवर्ते षष्टिस्थाने पञ्चदश द्विपञ्चाशदधि(क)शतस्य अष्टत्रिंशत्, यथा { १५/३८ }। एते हारिकाभागाः ॥

अथ मार्गविषयकालोपदेशकमुदाहरणमाह—

**कश्चित् पीलुपतिः कपोलफलकभ्रान्तद्विरेफावलिः**
**स्मृत्वा 'विन्ध्य'करेणुकाविलसितं गन्तुं प्रवृत्तो यदि।**
**अर्धोनद्विदिनेन योजनदलत्र्यंशं व्रजेत् सन्मते!**
**यायाद् योजनसप्ततिं खलु तदाऽहोभिः कियद्भिस्त्वसौ? ॥ ९३ ॥**[1]

न्यासपूर्वं योजनदलत्र्यंशस्य सवर्णना, यथा { १/१ | १/२ | १/३ }। प्रभागजातित्वात् "अंशाभ्यासच्छेदसंवर्गमेवे"त्युक्त्या एकानां गुणने एकः। एक एवोपरि। एकच्छेदगुणौ द्वौ द्वावेव, द्विगुणास्त्रयः षट् अधः। ततो यथा { १/६ | दि० २ १/२ | यो ७०/१ }। द्वितीयाङ्के भागापवाहजात्या सवर्णिते जातास्त्रयो द्विच्छेदाः, यथा { ३/२ }। ततः समिच्छया—सप्तत्या गुणितास्त्रयो जातं दशाधि(क)द्विशतम्, अधश्च एकच्छेदगुणौ द्वौ द्वावेव, यथा { २१०/२ }। योजनदलत्र्यंशोत्थैकच्छेदषडंशरूपस्य हरत्वात् "कृत्वा परी"त्यादिना उपरि षट्, अध एकः, यथा { ६/१ }। षण्णां द्विकस्यार्धापवर्ते क्रमात् त्रय एको जातः। ततस्त्रिगुणा दशाधि(क)द्विशती जाता त्रिंशदधि(क)षट्शती। एकच्छेदगुण एकभक्तं तदेव। ततो लब्धमेतावन्ति दिनानि। एषां षष्ट्यधि(क)त्रिशत्या भागे लब्धं वर्षमेकं नव मासाः, यथा { व१, मा९ } ॥

---

१ शार्दूलविक्रीडितम्।

अथान्यदुदाहरणमाह—

सद्लकरत्रयभोज(?ग)भुजङ्गो
विशति बिलेऽङ्गुलमर्धयुतं चेत् ।
गणक ! घटीत्रिलवेन यदाऽसौ
वद समयेन विशेत् कियताऽऽशु ॥ ९४ ॥[1]

न्यासः–सार्धमङ्गुलं प्राक् {१/१/२ | १/३ | ८४/१} । सार्धत्रयहस्ताङ्गुलैश्चतुरशीतिर्न्यस्ता। प्रथमे "छेदनिघ्ने"त्यादिना जाता द्विच्छेदास्त्रयः, यथा {३/२} । ततः समिच्छया–चतुरशीत्या मध्याङ्क एको गुणितो जाता चतुरशीतिः, अधश्च एकगुणास्त्रयस्त एव, यथा {८४/३} । आद्याङ्कस्य हरत्वात् "कृत्वा परी"त्यादिना उपरि द्वौ, अधश्च त्रयः, यथा {२/३} । अत्र कुलिशापवर्तनेन द्विकाधस्त्रिकस्य त्रिभागे एकः, तथा चतुरशीतेस्त्रिभागे अष्टाविंशतिः । तत उपरि द्विगुणा अष्टाविंशतिर्जाता षट्पञ्चाशत् । अधस्त्रिगुण एकस्त्रय एव । ततस्त्रिभिर्भागे लब्धं अष्टादश घटिकाः, यथा १८; शेषमुपरि द्वौ पानीयपलषष्ट्या गुणितौ जातं विंशत्यधि(क)शतम् । तस्य त्रिभिर्भागे लब्धं चत्वारिंशत् पलानि, यथा ४० ॥

अथ स्वर्णविषयमुदाहरणमाह—

गद्याणकः सधरणो ननु हाटकस्य
द्रम्मांश्चतुर्दश यदा लभते दलाढ्यान् ।
द्रम्मैस्तदा वद सखे ! नवतिप्रमाणै-
स्त्र्यंशोनितैश्च कनकं कियदाप्यते भोः ॥ ९५ ॥[2]

( न्यासः– ) {द्र १४/१/२ | १/१/२ | ९०/०१/३} । "छेदनिघ्ने"त्यादि(ना) आद्याङ्के एकोनत्रिंशद् द्विच्छेदा, द्वितीयाङ्के त्रयो द्विच्छेदाः, तृतीयाङ्के भागापवाहजात्या "हरनिघ्ने"-त्यादिना त्रिच्छेदा एकोनसप्ततिद्विशती, क्रमाद् यथा {२९/२ | ३/२ | २६९/३} । ततः समिच्छया–एकोनसप्ततिद्विशत्या मध्याङ्कं–त्रिकं गुणयेत् । जाता सप्ताधि(का) अष्टशती, अधश्च त्रिगुणौ द्वौ जाताः षट्, यथा {८०७/६} । ततः प्रथमाङ्कस्य हरत्वात् "कृत्वा परी"त्यादिनोपरि द्वौ, अधश्चैकोनत्रिंशत्, यथा {२/२९} । ततः कुलिशापवर्तनेन [3]षड्द्वयोरर्धापवर्ते एकस्त्रयश्च, यथा {१/२९ | ८०७/३} । उपर्येकगुणं तदेव । अधस्त्रिगुणा एकोनत्रिंशत् जाता सप्ताशीतिः । तथा उपर्यङ्के भक्ते लब्धं गद्याणका नव, यथा ९; शेषमुपरि चतुर्विंशतिः, अधश्च सप्ताशीतिः, यथा {२४/८७} ।

---

१ तामरसम् । एतल्लक्षणं यथा–"इह वद तामरसं नजजा यः" । २ वसन्ततिलका ।

३ 'द्विषड्कयोरर्धा०' इति प्रतिभाति ।

अनयोस्त्रिभिरपवर्ते उपरि अष्टौ, अधश्चैकोनत्रिंशत्, यथा $\left\{\frac{८}{२९}\right\}$। धरणानयनाय द्विगुणा अष्टौ षोडश । भागो न प्राप्यते इति धरणस्थाने शून्यम्, यथा $\{०\}$ । ततो निष्पावानयनाथाष्टगुणाः षोडश जातमष्टाविंशत्यधि(क)शतम् । अस्य एकोनत्रिंशता भागे लब्धं निष्पावाश्चत्वारः, यथा ४; शेषमुपरि द्वादश । यवानयनाय षड्गुणा जाता द्वासप्ततिः। अस्या एकोनत्रिंशता भागे लब्धं द्वौ यवौ, भागाश्च एकोनत्रिंशतश्चतुर्दश, यथा $\left\{\frac{१४}{२९}\right\}$ ॥

अथ व्यस्तत्रैराशिके धान्यविषयमुदाहरणमाह—

**हीराः षोडश सेतिकाष्टकभृतः षट्सेतिकैर्हीरकै-**
**रुन्मित्वा वद निश्चितं तु कियती सङ्ख्या सखे ! जायते ।[1]**

पूर्वार्धम् । न्यासः—$\left\{\frac{८}{१} \middle| \frac{१६}{१} \middle| \frac{६}{१}\right\}$। अत्र प्रमाणेन—अष्टभिः षोडश गुणिता जातमष्टाविंशत्यधि(क)शतम् । एके(?क)च्छेदगुण एकः (स) एव । समिच्छया व्यस्तत्रैराशिकत्वात् अन्त्याङ्केन "कृत्वा परी"त्यादिना उपर्येकः, अधश्च षट् । उपर्यधश्च एकगुणं तदेव, यथा $\left\{\frac{१२८}{६}\right\}$ । षड्भिर्भागे लब्धमेकविंशतिहारि(?हीर)काः । शेषमुपरि द्वौ, अधः षट् । अनयोरर्धापवर्ते उपर्येकः, अधश्च त्रयः, यथा $\left\{\frac{१}{३}\right\}$ ॥

अथोत्तरार्धेन स्वर्णविषयं व्यस्तत्रैराशिकमाह—

**हेम्नः षोडशवर्णिकस्य नवतिं गद्याणकानां तथा**
**दत्त्वैकादशवर्णिकं कियदहो सम्प्राप्यते काञ्चनम् ? ॥९६॥[2]**

(न्यासः—)$\left\{\frac{१६}{१} \middle| \frac{९०}{१} \middle| \frac{११}{१}\right\}$ । व्यस्तत्रैराशिकत्वात् प्रमाणेन—आद्याङ्कषोडशकेन मध्याङ्कं—नवतिं गुणयेत् । जातं(?ता) चत्वारिंशदधि(क)चतुर्दशशती । एकच्छेद गुण एकः स एव। समिच्छाङ्कस्य—एकादशकस्य हरत्वात् "कृत्वा परी"त्यादिना उपर्येकः, अधश्चैकादश। एकगुण उपर्यङ्कः स एव। एकगुणैकादशभिर्भागे लब्धं त्रिंशदधि(क)शतं गद्याणकाः, शेषं दश चैकादशभागाः, यथा $\left\{\frac{१०}{११}\right\}$ । अत्रेच्छाह्रासे मूल्यस्थानीयसुवर्णस्य वृद्धिरभूत् । त्रैराशिकादिविषमेष्वेकादशान्ते श्रित्येय(?) स्यात् ॥

अथ पञ्चराशिके करणसूत्रं वृत्तमाह—

**आनीय पक्षमपरं फलमन्यराशि-**
**पक्षेण पक्षमपरं विभजेच्छिदां च ।**
**कृत्वा विपर्ययविधिं निजपक्षराशि-**
**घातं विधाय च परस्परं(र)तत्क्षणं च ॥ ९७ ॥[3]**

---

१–२ शार्दूलविक्रीडितम् । ३ वसन्ततिलका ।

व्याख्या—फलं व्याजलक्षणं अपरं पक्षं प्रथमात् द्वितीयपक्षाधो विन्यस्य छिदां—छेदानां सर्वत्र विपर्ययं कृत्वा निजपक्षराशेर्घातं प्राक्पक्षराशेः परस्परं तत्क्षणं च घातं—गुणनं द्वितीयराशेरपि परस्परं घातं—गुणनं कृत्वा अन्यराशिपक्षेण—प्राच्यगुणिताङ्केन अपरं पक्षं—द्वितीयपक्षं कृतपरस्पराघातं सञ्जातबहुराशिकं विभजेत्॥

अत्रोद्देशकवृत्ते सर्वज्ञातोदाहरणमाह—

मासेन पञ्चकशतेन हि वत्सरेण
षट्सप्ततेर्भवति हन्त कलान्तरं किम् ? ।
कालं फलं च वद मूलधनं च ताभ्यां
चेत् पञ्चराशिकविधानमवैहि विद्वन्! ॥ ९८ ॥[1]

न्यासः—{ मा १ | १२ ; द्र १०० | ७६ ; व्या ५ | } । सर्वेऽप्येते एकच्छेदाः । प्राक्पक्षात् फलं—मासिकद्रम्मपञ्चकलक्षणमपरं पक्षं—द्वितीयपक्षाङ्कमानीय, यथा { १ | १२ ; १०० | ७६ ; | ५ } छिदामिहैव(?) परपक्षसञ्ज्ञमन्यराशिपक्षेण-प्रागेकगुणशतेन विभजेत्, यथा { ४५६० / १०० } । लब्धं कलान्तरं ४५, शेषमुपरि षष्टिः, अधः शतम्, यथा { ६० / १०० } । अनयोर्विंशत्या अपवर्ते उपरि त्रयः, अधश्च पञ्च, यथा { ३ / ५ } ॥

अथ एतस्य प्रथमदत्तधने अज्ञाते व्याजयिना नीताः पञ्चचत्वारिंशद् द्रम्माः पं[2]ञ्च त्रिभागाश्च । एवं सति न्यासः—{ १ | १२ ; १०० | ० ; ५ | ४५ ३/५ } । अत्र "छेदनिघ्ने"त्यादिना पञ्चगुणा पञ्चचत्वारिंशत् जाता पञ्चविंशत्यधि(क)द्विशती । मध्ये त्रिक्षेपे जाता अष्टाविंशत्यधि(क)द्विशती पञ्चच्छेदा, यथा { १ | १२ ; १०० | ० ; ५ | २२८/५ } । यत्र फलद्वयं पक्षद्वयेऽपि छेदेन सह विपर्यस्तं लेख्यम् । ततः प्राक् फलव्यत्ययः, यथा { १ | १२ ; १०० | ७ ; २२८/५ | ५/१ } । ततश्छेदव्यत्ययश्च, यथा { १ | १२ ; १०० | ० ; २२८ | ५ ; १ | ५ } । एतत् कृत्वा निजपक्षराशिघातं कृत्वा यथा—एकगुणं शतं तदेव, शतगुणाऽष्टाविंशत्यधि(क)द्विशती जाता द्वाविंशतिसहस्रा अष्टशती एकच्छेदा, यथा { २२८०० / १ } । अपरपक्षाङ्के यथा—द्वादशगुणाः पञ्च जाता षष्टिः । षष्टिगुणाः पञ्च जाता त्रिशती । अत्र "विभजेद् बहुराशिपक्षमितरेण" त्रिशत्युक्त्या त्रिशत्या द्वाविंशतिसहस्राणामष्टशतानां च भागे दत्ते लब्धं षट्सप्ततिः । एतत् मूलधनं गृहीतमिति ज्ञायते, यथा { ७६ } ॥

अस्यैवोदाहरणस्य कालेऽज्ञाते न्यासः, यथा { १ | ७६ ; १०० | ४५ ; ५ | ३/५ } । अत्र भागानु-

---

१ वसन्ततिलका । २ 'त्रयः पञ्चभागाश्च' इति प्रतिभाति ।

बन्धसवर्णनया प्रागिव जाता अष्टाविंशत्यधि(क)द्विशती पञ्चच्छेदा। फलद्वयस्य छेदद्वयस्य पूर्ववद् विपर्ययः, यथा $\left\{\begin{array}{ccc|cc} & \text{१} & & \text{०} & \\ \text{१} & \text{०} & \text{०} & \text{७} & \text{६} \\ \text{२} & \text{२} & \text{८} & & \text{५} \\ & & \text{१} & & \text{५} \end{array}\right\}$। प्राग्वदाद्यपक्षाङ्कगुणनम्—जाता द्वाविंशतिसहस्रा अष्टशती। एषां अपराङ्कपक्षगुणनेन यथा पञ्चकद्वयगुणितया षट्सप्तत्या जातैकोनविंशतिशत्या भागे लब्धमज्ञातमासा द्वादश, यथा $\{\text{१२}\}$ ॥

अथ प्रमाणफले मासं प्रतिशतं प्रति पञ्चकव्याजलक्षणेऽज्ञाते न्यासः—$\left\{\begin{array}{ccc|cc} & \text{१} & & \text{१} & \text{२} \\ \text{१} & \text{०} & \text{०} & \text{७} & \text{६} \\ & \text{०} & & \text{४} & \text{५} \\ & & & & \text{३} \\ & & & & \text{५} \end{array}\right\}$। अत्रापि प्राग्वत् सवर्णनया जाता अष्टाविंशत्यधि(क)द्विशती पञ्चच्छेदा। एतदेव फलं प्राच्याङ्कपक्षे आनेयम्। द्वितीयफलाभावाच्छेद-विपर्ययेण च पञ्चको द्वितीयपक्षे गतः। ततः पूर्वाङ्कः प्राग्वत् गुणितो जाता द्वाविंशतिसहस्रा अष्टशती। द्वितीयपक्षे द्वादशगुणा षट्सप्ततिर्जाता [1]नवाधि(क)द्वादशशती। इयं पञ्चगुणा जाता चतुःसहस्री पञ्चशती षष्टिश्च। अनया प्राच्यपक्षगुणिताङ्कद्वाविंशतिसहस्रादेर्भागे लब्धं प्रमाणफलं मासं प्रति पञ्च द्रम्माः, यथा ५ ॥

अथ प्रमाणधने शतकलक्षणेऽज्ञाते न्यासः, यथा $\left\{\begin{array}{c|cc} \text{१} & \text{१} & \text{२} \\ \text{०} & \text{७} & \text{६} \\ \text{५} & \text{४} & \text{५} \\ & & \text{३} \\ & & \text{५} \end{array}\right\}$। प्राग्वत् सवर्ण-नया जाता अष्टाविंशत्यधि(क)द्विशती पञ्चच्छेदा। ततः फलद्वयस्यैकपञ्चच्छे-दस्य (च) विनिमये यथा $\left\{\begin{array}{ccc|cc} & \text{१} & & \text{१} & \text{२} \\ & \text{०} & & \text{७} & \text{६} \\ \text{२} & \text{२} & \text{८} & & \text{५} \\ & \text{१} & & & \text{५} \end{array}\right\}$। पूर्वाङ्क एकगुणः स एव। ततोऽनेन परपक्ष-गुणितस्य जातद्वाविंशतिसहस्राष्टशतिकाङ्कस्य भागे लब्धं शतम्, यथा १०० ॥

अथ प्रमाणकाले मासलक्षणेऽज्ञाते न्यासः—$\left\{\begin{array}{ccc|cc} & \text{०} & & \text{१} & \text{२} \\ \text{१} & \text{०} & \text{०} & \text{७} & \text{६} \\ & & \text{५} & \text{४} & \text{५} \\ & & & & \text{३} \\ & & & & \text{५} \end{array}\right\}$। अत्रापि प्राग्वत् सवर्णिते जाता अष्टाविंशत्यधि(क)द्विशती पञ्चच्छेदा। ततः फलद्वयस्य एकस्य पञ्चकच्छेदस्य च विनिमये यथा $\left\{\begin{array}{ccc|cc} & \text{०} & & \text{१} & \text{२} \\ \text{१} & \text{०} & \text{०} & \text{७} & \text{६} \\ \text{२} & \text{२} & \text{८} & & \text{५} \\ & \text{१} & & & \text{५} \end{array}\right\}$। प्राच्याङ्के शतगुणे जाता द्वाविं-शतिसहस्रा अष्टशती। अस्याः परपक्षे परस्परगुणनोत्पन्नेन द्वाविंशतिसहस्राऽ-ष्टशतलक्षणेन भागे लब्धं प्रमाणकालो मास एकः, यथा १ ॥

अथ भिन्नोदाहरणमाह—

मासत्रिभागेन दलाधिकस्य
शतस्य सार्धद्वितयं फलं चेत्।
मासैस्तदाऽष्टाभिरहो सपादैः
पादोनितायाः वद विंशतेः किम् ॥ ९९ ॥[2]

---

१ 'द्वादशाधिका नवशती' इति प्रतिभाति। २ उपजातिः।

न्यासः—{ [illegible] } । एकस्त्रिभागस्तथैवास्ति । अधः "छेद-निघ्ने"त्यादिना जाता एकोत्तरा द्विशती द्विच्छेदा, यथा { १ / ३ / २०१ / २ } । तथा "छेद-निघ्ने"त्यादिना सार्धद्वितयसवर्णने जाताः पञ्च द्विच्छेदाः, ते द्विच्छेदा एकोत्तर-द्विशताधो योज्याः, यथा { [illegible] } । ततो[1] द्विपक्षे "छेदनिघ्ने"त्यादिना चतुर्गुणा अष्टौ सैकाश्च जातास्त्रयस्त्रिंशत् चतुश्छेदा, यथा { ३३ / ४ } । अधश्च भागापवाहजातित्वात् चतुर्गुणाया विंशतेरेकापनयने (जाता) एकोनाशीतिश्चतुश्छेदा, यथा { ७९ / ४ } । इति पक्षद्वयेऽपि सवर्णनायां जातायां फलं द्विच्छेदपञ्चलक्षणमपरं पक्षमानीय यथा { ३३ / ४ / ७९ / ४ / ५ / २ } । अथ पक्षद्वयेऽपि सर्वच्छेदानां व्यत्ययं कृत्वा यथा

{ १ / ४ / २०१ / ४ | ३३ / ३ / ७९ / २ / ५ / २ } पञ्चकाधो द्विकच्छेदस्यापि व्यत्ययं प्राच्याङ्कपक्षे कृत्वा यथा { १ / ४ / २०१ / ४ / २ } ।

प्राक्पक्षे एकगुणाश्चत्वारस्त एव । चतुर्गुणा एकद्विशती जाता चतुरुत्तराऽष्टशती । इयं चतुर्गुणा जाता द्वात्रिंशदधि(क)षोडशशती । इयं च द्विगुणा जाता षट्सहस्री चत्वारि शतानि द्वात्रिंशच्च । अस्यार्धापवर्ते षोडशाधि(क)द्वात्रिंशत्श(च्छ)ती[2] । अयं भागदायी राशिर्ज्ञेयः । द्विपक्षे त्रिगुणास्त्रयस्त्रिंशत् जाता नवनवतिः । अनया गुणिता एकोनाशीतिर्जाता अष्टसप्ततिशती एकविंशतिश्च । इयं द्विगुणा जाताः पञ्चदश सहस्राः षट्शती द्विचत्वारिंशच्च । एते च पञ्चगुणा जाता अष्टसप्तति-सहस्रा द्विशती दश च । अस्यार्धापवर्ते जाता एकोनचत्वारिंशत् सहस्राः शतं पञ्च च । अस्य भाज्यराशेः प्राक्कथितभागराशिद्वात्रिंशदादिना भागे लब्धं रूपाणि द्वादश, यथा १२ । शेषमुपरि त्रयोदशाधि(क)पञ्चशती, अधश्च द्वात्रिंशत्श(च्छ)ती षोडश च, यथा { ५१३ / ३२१६ } । अनयोस्त्रिभिरपवर्ते उपरि एकसप्तत्यधि(क)शतम्, अधश्च सहस्रं द्वासप्ततिश्च, यथा { १७१ / १०७२ } । अत्राप्यविदितकालान्तराद्यानयनं पूर्ववत् ॥

अथ तृतीयोदाहरणमाह—

अहो अहोभ्यां यदि कर्मकारा-
स्त्रयो लभन्ते पणविंशतिं हि ।
जनाष्टकं वासरपञ्चकेन
प्राप्नोति किं पण्डित ! मे प्रचक्ष्व ॥ १०० ॥[3]

---

१. द्वितीयपक्षे । २ 'षोडशाधिका द्वात्रिंशच्छती' इति प्रतिभाति । ३ उपजातिः ।

न्यासः—

| | |
|---|---|
| दि २ | दि ५ |
| क ३ | क ८ |
| प २० | ० |

। अत्र विंशतिमपरपक्षमानीय. यथा { ५ ८ २० } सर्वत्र एकस्यैव छेदत्वात् न व्यत्यये किमपि फलमिति न छेदव्यत्ययः। ततः प्राक्पक्षे द्विगुणास्त्रयो जाताः षट् । द्विपक्षे पञ्चगुणा अष्टौ जाता चत्वारिंशत् । अनया गुणिता विंशतिर्जाता अष्टशती । अस्याः षड्भिर्भागे लब्धं पणास्त्रयस्त्रिंशदधि(क)शतम्, यथा १३३ । शेषमुपरि द्वौ, अधः षट् । अनयोरर्धापवर्ते क्रमादेकस्त्रयश्च, यथा { १ ३ } ॥

अथ कणविषये चतुर्थमुदाहरणमाह—

अष्टौ शालेर्मानिका भाटकेन
नीयन्ते चेद् योजनं षट्पणेन ।
तस्मिन् (? र्हि ) विद्वन्! ब्रूहि मानीत्रिषष्टेः
षट्क्रोशानां भाटकं न्याहृतानाम् ॥ १०१ ॥[1]

न्यासः—

| | |
|---|---|
| मा ८ | ६३ |
| क्रो ४ | क्रो १८ |
| प ६ | ० |

। अत्र षट्कं फलमपरं पक्षमानीय यथा { ६३ १८ ६ } एकस्यैव सर्वत्र छेदत्वान्न व्यत्ययः। ततः प्राक्पक्षे अष्टगुणाश्चत्वारो जाता द्वात्रिंशत्। द्विपक्षे त्रिषष्टिगुणा अष्टादश जाता चतुस्त्रिंशदधि(का) एकादशशती । इयं षड्गुणा जाता षट्सहस्रा अष्टशती चत्वारश्च । एषां द्वात्रिंशता भागे लब्धं रूपाणि द्वादशाधि(क)द्विशती, यथा { २१२ } । शेषमुपरि विंशतिः, अधश्च द्वात्रिंशत् । अनयोश्चतुर्भिरपवर्ते क्रमात् पञ्चाष्टौ, यथा { ५ ८ } । एवं पञ्चराशिकं समाप्तम् ॥

पञ्चराशिलक्षणेन "आनीय पक्षमपर"मित्यादिना सप्तनवैकादशराश्युदाहरणानि जायन्ते अत्र। तथा च लीलावत्याम्—

"पञ्चसप्तनवराशिकादिके-ष्व(? ऽन्यो)न्यपक्षनयनं फलच्छिदाम् ।
संविधाय बहुराशिजे वधे, स्वल्पराशिवधभाजिते फलम् ॥"[3]

अथ सप्तराशिके उदाहरणमाह—

द्विकव्यासोऽष्टकायामः, कम्बलो लभते दश ।
अन्यौ द्वौ त्रिनवायामौ, किमाप्नुतः कथ्यताम् ॥ १०२ ॥[4]

---

१ शालिनी । २ प्रेक्ष्यतामष्टादशं पृष्ठम् । ३ रथोद्धता । ४ अनुष्टुप् (?) ।

न्यासः—{ १|२|८|१० । २|३|९ } । एकतो राशिचतुष्कमेकतस्त्रयः । ततः फलं दशकं अपरं पक्षमानीय यथा { २|३|९|१० } छेदव्यत्ययश्च न, एकस्यैव छेदत्वात् । ततः प्राक्पक्षे एकगुणौ द्वौ द्वावेव । द्विगुणा अष्टौ जाताः षोडश । द्विपक्षे द्विगुणास्त्रयो जाताः षट् । षड्गुणा नव जाता चतुःपञ्चाशत् । एतद्गुणा दश जाता चत्वारिंशदधि(क)पञ्चशती । अस्याः षोडशभिर्भागे लब्धं त्रयस्त्रिंशद् रूपाणि, यथा ३३ । शेषमुपरि द्वादश, अधः षोडश, यथा { १२/१६ } । अनयोश्चतुर्भिरपवर्ते क्रमात् त्रयश्चत्वारः, यथा { ३/४ } । एवं सप्तराशिकं समाप्तम् ॥

अथ नवराशिकमुदाहरणमाह—

**आयाम ९ व्यास ५ पिण्डेन १, नवपञ्चैकहस्तिका ।**
**लभतेऽष्टौ शिलाऽन्ये द्वे, दशसप्तद्विहस्तिका ॥ १०३ ॥**[1]

(न्यासः—){ १|९|५|१|८ । २|१०|७|२ } । अत्र फलमष्टौ परं पक्षमानीय यथा { २ १० ७ २ ८ } सर्वेषामेक एव छेद इति न छेदव्यत्ययः । ततः प्राक्पक्षे मिथो गुणने जाता पञ्चचत्वारिंशत् । द्विपक्षे अष्टपर्यन्तं मिथो गुणने जाता द्विसहस्री (द्विशती) चत्वारिंशच्च । एषां पञ्चचत्वारिंशता भागे लब्धमेकोनपञ्चाशत् । शेषमुपरि पञ्चत्रिंशत्, अधः पञ्चचत्वारिंशत् । अनयोः पञ्चभिरपवर्ते क्रमात् सप्त नव लब्धम्, यथा { ४९ ७/९ } ॥

[2]**पिण्डे अर्कमिताङ्गुलाः किल चतुर्वर्गाङ्गुला विस्तृतौ**
**पट्टा दीर्घतया चतुर्दश कराास्त्रिंशल्लभन्ते शतम् ।**
**एता [3]विस्तृतिदीर्घ(?दैर्घ्य)पिण्डमितयो येषां चतुर्वर्जिताः**
**पट्टास्ते वद मे चतुर्दश सखे ! मूल्ये(?ल्यं) लभन्ते कियत् ? १०४**[4]

न्यासः—{ १२|८ ; १६|१२ ; १४|१० ; ३०|१४ ; १०० } । अत्र फलं शतमपरं पक्षमानीय यथा { ८ ; १२ ; १० ; १४ ; १०० } ।

प्राक्(?द्वि)पक्षे मिथो गुणने जातास्त्रयोदश लक्षाश्चतुश्चत्वारिंशत् सहस्राः, यथा १३४४००० । द्वि(?प्राक्)पक्षे शत(त्रिंशत् ?)पर्यन्तं मिथो गुणने जाता अशीतिसहस्राः षट्शती चत्वारिंशच्च, यथा ८०६४० । ततो “विभजेद् बहुराशिपक्षमितरेण” त्युक्त्या अशीतिसहस्रादिनाऽल्पाङ्केन बहुराशित्रयोदशलक्षादिकं विभजेत् । लब्धं मूल्यं षोडश द्रम्माः । शेषमुपरि त्रिपञ्चाशत् सहस्राः सप्तशती षष्टिश्च, अधश्चाशीतिसहस्रादिः, यथा { ५३७६०/८०६४० } । अनयोः षड्विंशतिसहस्रैरष्टशतैरशीत्या चापवर्ते लब्धमुपरि द्वौ, अधश्च त्रयः, यथा { २/३ } ॥

---

१ अनुष्टुप् । २ इदं पद्यं **लीलावत्यां** विंशतितमे पृष्ठे वर्तते । ३ ‘विस्तृतिपिण्डदैर्घ्यमितयो’ इति **लीलावत्यां** पाठः । ४ शार्दूलविक्रीडितम् ।

अथैकादशराशिके उदाहरणमाह—

[1]पट्टा ये प्रथमोदितप्रमितयो गव्यूतिमात्रे [2]गते
तेषामानयनाय चेत् शकटिनां द्रम्माष्टकं भाटकम् ।
अन्ये ये तदनन्तरं निगदिता माने चतुर्वर्जिता-
स्तेषां का भवतीह भाटकमितिर्गव्यूतिषट्के वद ॥ १०९ ॥[3]

(न्यासः–) { १२ | १६ | १४ | ३० | १ | ८ । ८ | १२ | १० | १४ | ६ } । अत्राष्टकं फलं अपरं–द्विपक्षमानीय यथा { ८ १२ १० १४ ६ ८ } सर्वत्रैकस्यैव छेदत्वान्न विनिमये तात्पर्यम् । तेन प्राक्पक्षे द्वादशादे(रे)कान्तं मिथो घाते जातं अशीतिसहस्राः षट्शती चत्वारिंशत् । द्विपक्षे मिथो घाते जातं षट् लक्षाः पञ्चचत्वारिंशत् सहस्रा विंशत्यधि(क)शतमेकम् । ततो "विभजेद् बहुराशिपक्षमितरेणे"त्युक्त्या षड्लक्षाद्यङ्कस्य अशीतिसहस्रादिना भागे यथा { ६४५१२० / ८०६४० } लब्धं द्रम्मा अष्टौ, यथा ८ । पञ्चराशिकादौ प्रथमं प्राक्पक्ष एकराश्यधिकः । पश्चात् फलस्य परत्र न्यासेन द्विपक्षो राश्यधिकः कार्यः । इत्येकादशराशिकं समाप्तम् ॥

अथ पञ्चराशिकाश्रयं भाण्डेन–वस्तुना प्रतिभाण्डस्य–द्वितीयवस्तुनो यद् ग्रहणं तद् भाण्डप्रतिभाण्डम् । तद्विनिमयप्ररूपकं करणसूत्रं वृत्तार्धमाह—

पञ्चराशिकविधिर्विधीयते
मूल्ययोर्विनिमये कृते सति ।[4]

व्याख्या—प्राक्पक्षन्यस्तमूल्याङ्को द्विपक्षे द्विपक्षन्यस्तमूल्याङ्कः प्राक्पक्षेण आनीयते इति मूल्यविनिमये एतेन छेदविनिमयोऽपि कार्य इत्युक्तम् । "आनीय पक्ष"मित्यादिना गुणनभागविधी च पूर्ववत् । तथा च [5]लीलावत्यां "तथैव भाण्डप्रतिभाण्डकेऽपि [6]विधिर्विपर्यस्य हरांश्च मूल्ये" इत्युक्तम् ।

अत्रोदाहरणमाह—

यदि खलु सहकाराः षोडशाप्याप(ः) णेन
त्रिभिरपि च पणैश्चेद् दाडिमानां शतं हि ।
विनिमयविधिना स्युर्दाडिमानां फलानि
प्रवद गणक ! तन्मे द्वादशाम्रैः कियन्ति ? ॥[7]

---

१ इदं पद्यं लीलावत्या विंशतितमे पृष्ठे समस्ति । २ 'स्थितास्तेषा०' इति लीलावती-पाठः । ३ शार्दूलविक्रीडितम् । ४ रथोद्धता । ५ समीक्ष्यतां विंशतितमं पृष्ठम् । ६ 'विपर्ययस्तत्र सदा हि मूल्ये' इति लीलावतीपाठः । ७ मालिनी ।

न्यासः—$\left\{\begin{array}{c|c} १ & ३ \\ १६ & १०० \\ १२ & \end{array}\right\}$। अत्र मूल्ययोरेकत्रिकयोर्विनिमये फलस्य—द्वादशकस्य च परपक्षानयने यथा $\left\{\begin{array}{c|c} ३ & १ \\ १६ & १०० \\ & १२ \end{array}\right\}$ प्राक्पक्षे मिथो घातेऽष्टचत्वारिंशत्। द्विपक्षे मिथो घाते जाता द्वादशशती। अस्या अष्टचत्वारिंशता भागे लब्धं दाडिमानां पञ्चविंशतिः, यथा २५ ॥

द्वितीयोदाहरणमाह—

पलद्वयं षड्भिरवाप्यतेऽगुरोः
कुरङ्गनाभेर्नवभिः पलं यदि।
तदाऽगुरोः सप्तपलैस्तु लभ्यते
कुरङ्गनाभिः कियती निगद्यताम् ॥[1]

न्यासः—$\left\{\begin{array}{c|c} ६ & ९ \\ २ & १ \\ ७ & \end{array}\right\}$। अत्र षड्नवमूल्ययोर्विनिमये फलस्य—सप्तकस्य च परपक्षानयने यथा $\left\{\begin{array}{c|c} ९ & ६ \\ २ & १ \\ & ७ \end{array}\right\}$। सर्वत्र एकस्य छेदत्वान्न विनिमये फलम्। प्राक्पक्षे मिथो घाते जाता अष्टादश। द्विपक्षे सप्तान्तं मिथो घाते द्विचत्वारिंशत्। अस्या अष्टादशभिर्भागे लब्धं पलद्वयम्; शेषमुपरि षट्, अधश्चाष्टादश। अनयोः षड्भिरपवर्ते उपर्येकः, अधश्च त्रयः, यथा $\left\{\frac{१}{३}\right\}$। इत्यादि भाण्डविनिमयः समाप्तः ॥

पञ्चराशिकाश्रय एव जीवविक्रये करणसूत्रं वृत्तार्धमाह—

जीवविक्रयविधौ पुनर्वयो-
व्यत्यये तु विहितेऽत्र पूर्ववत् ॥ १०८ ॥[2]

व्याख्या—अत्र द्वयोर्जीवयोर्वयोव्यत्ययः कार्यः। शेषविधिः सर्वोऽपि "आनीय पक्षमपरं" इत्यादिकः प्रागिव कार्यः ॥

अत्रोदाहरणमाह—

द्विरष्टवर्षा यदि सप्तति स्त्री
प्राप्नोति तद्विंशतिवार्षिकाऽन्या।
किमाप्नुयात् तत्समरूपवर्णा
व्यावर्ण्यतां चेद् गणिते श्रमोऽस्ति ॥ १०९ ॥[3]

न्यासः—$\left\{\begin{array}{c|c} १ & १ \\ १६ & २० \\ ७० & \end{array}\right\}$। अत्र वयसोः षोडशविंशत्योर्व्यत्यये तथा फलस्य—सप्ततिश्च परपक्षानयने यथा $\left\{\begin{array}{c|c} १ & १ \\ २० & १६ \\ & ७० \end{array}\right\}$। प्राक् मिथो घाते विंशतिः। द्विपक्षे मिथो घाते जाता एकादशशती विंशतिश्च। अस्या विंशत्या भागे लब्धं मूल्यं षट्पञ्चाशत्, यथा ५६। अत्र वयोवृद्धौ मूल्यस्य प्रत्युत ह्रासो जायते ॥

---

१ वंशस्थविलम्। २ रथोद्धता। ३ उपजातिः।

द्वितीयोदाहरणमाह—

दशाब्दिकोष्ट्रत्रयमाप्यते चेत्
सखे ! शतेनाष्टसमन्वितेन ।
तद्रूपवेगा नववार्षिकोष्ट्रा
अष्टौ प्रचक्ष्वाशु कियल्लभन्ते ॥ ११० ॥[1]

न्यासः—{ ३ १० १०८ | ८ १ } । अत्र दशनवाख्यवयसोर्व्यत्यये अष्टाधि(क)शतस्य च परपक्षानयने यथा { ३ १ | ८ १० १०८ } । प्राक्पक्षे मिथो घाते सप्तविंशतिः । द्विपक्षे मिथो घाते अष्टसहस्री षट्शती चत्वारिंशच्च । अस्याः सप्तविंशत्या भागे लब्धं विंशत्यधि(क)त्रिशती, यथा ३२० । लीलावत्यां जीवविक्रयो व्यस्तत्रैराशिके "जीवानां वयसो मू(?मौ)ल्ये" इत्यादिनोक्तः,[2] परमेकविषय एवायाति । पश्चादष्टादीच्छया गुणनीयः, तथाहि इदमेवोदाहरणम् । यदा एको दशवर्षः षट्त्रिंशतम्—अष्टशतत्रिभागं लभते तदा नववर्षः किं लभत इति । न्यासः—{ १० | ३६ | ९ } । अत्र प्रमाणेन दशकेन गुणिता षट्त्रिंशत् जाता षष्ट्यधि(क)त्रिशती । समिच्छया—नवकेनास्या भागे लब्धं चत्वारिंशत् । नववर्षस्यैकस्य मूल्यं व्यस्तत्रैराशिकेनायातम् । ततः स्वेच्छया—अष्टादिना गुण्यते, यथा—अत्राष्टगुणा चत्वारिंशत् जाता विंशत्यधि(क)त्रिशती । एवमत्र ज्ञेयम् । भिन्नभागहारेऽपि एकस्य मूल्यं भागानुबन्धादिना सवर्ण्य स्वेच्छया पश्चाष्टादिना गुणयित्वाऽधश्छेदेन भक्ते फलं लभ्यते पञ्चराशिकवत् । एवं जीवविक्रयः समाप्तः ॥

मिश्रव्यवहारे करणसूत्रं वृत्तमाह—

निजकालहतं प्रमाणराशिं
परकालं फलताडितं च कुर्यात् ।
निजयोगहृतौ विमिश्रनिघ्नौ
भवतो मूलकलान्तरे क्रमेण ॥ १११ ॥[3]

व्याख्या—निजकालेन—एकमासादिना हतं—गुणितं प्रमाणराशिं—शतादि कुर्यात् । परकालं—द्वादशमासादि फलताडितं—एकमासिकव्याजेन पञ्चकादिना फलेन गुणितं कुर्यात् । ततो निजयोगः प्रमाणराशेर्निजकालहतस्य शतादेः फलताडितपरकालेन सम्बन्धः । तेन हृतौ—भक्तौ एतेन निजयोगः पृथक् स्थाप्य(ः) प्राक् गुणितः प्रमाणराशिः परकालराशिश्च तथैव स्थितो मिश्रेण—व्याजमौलक्यद्रम्म-

१ उपजातिः । २ समीक्ष्यतामष्टादशं पृष्ठम् । ३ औपच्छन्दसिकम् ।

समुच्चयेन—षण्णवत्यादिना निघ्नौ—गुणितौ प्रागुदितनिजयोगभक्तौ मूलकलान्तरे। क्रमेण राशौ निजयोगभक्ते मूलद्रम्माः, परकालराशौ निजयोगभक्ते कलान्तरं च भवतीति सम्बन्धः।

अत्रोदाहरणमाह—

[1]पञ्चकेन शतेनाब्दे, फलमूलयुतिः शतम्।
चतुरूनं सखे! दृष्टं, किं मूलं किं कलान्तरम्? ॥११२॥[2]

न्यासः—{१|१००|५|१२|९६}। निजकालेन—एकेन हतः प्रमाणराशिः—शतं तदेव। परकालराशिः—द्वादश फलेन—पञ्चकेन ताडितो जाता षष्टिः। ततोऽनयोः शतषष्ट्योर्योगे षष्ट्याधि(?दि) पृथक् स्थाप्यम्। ततः प्रमाणराशिः—शतं षण्णवत्या गुणितो जाता षण्णवतिशती, यथा ९६००। तथा परकालराशिः—षष्टिः षण्णवत्या गुणितो जाताः पञ्च सहस्राः सप्तशती षष्टिश्च, यथा ५७६०। अनयोः क्रमेण निजयोगेन पृथक् स्थापितम्। षष्ट्याधि(क)शतेन भागेन लब्धं क्रमेण मूलं षष्टिः, कलान्तरं च षट्त्रिंशत्। अनयोर्योगे षण्णवतिः। इत्थं भिन्नमपि ज्ञेयम्॥

अथ व्याजोपजीविवृत्तिविषयं करणसूत्रं वृत्तमाह—

प्रमाणराशिर्निजकालनिघ्नो
व्यतीतकालेन हृतः फलादिः।
मिश्रस्वनिघ्ना विहृताः स्वयुत्या
मूलादयस्ते क्रमशो भवन्ति ॥११३॥[3]

व्याख्या—प्रमाणराशिर्निजकालनिघ्नः पूर्ववद् व्यतीतकालेन—द्वादशमासैर्हतो—गुणितः 'फलादिः' फलं—व्याजोपदिष्टपञ्चकं आदिशब्दाद् भाव्य(?)कादिः। एते 'मिश्रस्वनिघ्नाः' मिश्रेण—सर्वमिलितद्रव्येण गुणिताः स्वयुत्या—प्रमाणराशिमिलितफलादिराशियुत्या हृता—दत्तभागाः क्रमशो मूलादयो भवन्ति (इति) सम्बन्धः॥

अत्रोदाहरणमाह—

मासैकेन शतस्य कोविद! फलं पञ्चैकको भाव्यके(?)
वृत्तौ द्रम्मदलं च लेखककृते तद्वत् तुरीयांशकः।
मासैर्द्वादशभिः सखे! नवशतीमिश्रं च पञ्चोत्तरा(रं?)
मूलाद्यं वद मिश्रकव्यवहृतौ यद्यस्ति ते कौशलम्॥११४॥[4]

---

१ अयं चरणो दृश्यते लीलावत्या एकविंशतितमे पृष्ठे। २ अनुष्टुप्। ३ उपजातिः। ४ शार्दूलविक्रीडितम्।

